— हिंसादेःकरणेऽपि प्रकृतिदुष्टता कथमपि न याति—

निषिद्धस्य विधानेऽपि, हिंसादेर्भूतिकामिभिः ।
दाहस्येव न सद्वैद्यै (सद्वेदै)-र्याति प्रकृतिदुष्टता ॥२४॥

'भूतिकामिभिः'='श्वेतं वायव्यमजमालभेत भूतिकामः' इति, भूतिकामः पशुमालभेतेति वेदवचनाधारेण भूतिकामिभिः-ऐहिकपारलौकिकभोगैश्वर्यकामिभिः (न हिंस्यात्सर्वभूतानि) एकतो-उत्सर्गतो निषिद्धस्य प्रतिषिद्धस्य हिंसादेः, अन्यतोऽपवादतोऽपि विधाने-करणे दाहस्येवाग्नेरिव सद्वैद्यै हिंसादेः सद्वेदैरपि (महावेदैः) प्रकृतिदुष्टता सहजदुष्टता-पीडादिदुर्गतिदानादिरूपा न याति-न दूरे कदाचित् केनचित्कुत्रचिदपि गच्छतीति ॥२४॥

— हिंसादाहयो दृष्टान्तसाम्यतासिद्धिः —

हिंसा भावकृतो दोषो दाहस्तु न तथेति चेत् ।
भूत्यर्थं तद्विधानेऽपि, भावदोषः कथं गतः ? ॥ २५ ॥

किं च हिंसा,·मानसिकाऽशुद्धिरूपभावेन कृतो दोषोऽस्ति, 'दाहस्तु न तथे' ति मानसिकाऽशुद्धिजन्यो दोषो नार्थाद् दृष्टान्तवैषम्यमस्तीति चेत्·भूतिकामनया पशुहिंसाविधानेऽपि मानसिकाऽशुद्धिरूपो

॥ २३ ॥

भावदोषः कथं गतः ? यतो हिंसापरिणाममनःशुद्ध्यो-विरोधात् कथंचिदपि भूतिकामनया हिंसाविधाने भावदोषस्तदवस्थ एवेति, दुःखदुर्गतिदानादिका प्रकृतिदुष्टताऽपेक्षया, हिंसादाहयो र्न दृष्टान्तवैषम्यमपि तु दृष्टान्तसाम्यमेवेति ॥२५॥

योगिनःश्येनयागं किं त्यजन्तिः—

वेदोक्तत्वान्मनःशुद्ध्या, कर्मयोगोऽपि योगिनः ।
ब्रह्मयज्ञ इतीच्छन्तः, श्येनयागं त्यजन्ति किम् ? ॥ २६ ॥

॥ २६ ॥

यज्ञादिरूपकर्मयोगः, स्वरूपतः सावद्यत्वात् संक्लिष्टपरिणामजनकत्वाच्चित्तशुद्धिं न जनयत्येव, यदि वेदविहितं यज्ञादिकर्म, सावद्यमपि चित्तशुद्धिजनकं स्यात्तदा 'शत्रुवधाय श्येनयागःकार्यः' इति वेदविहितमपि श्येनयागादि कर्म 'दुर्गतिपरम्परारूपानुबन्धस्य भयंकरतारूपत्वादतिनिन्द्यं कर्माऽस्ति भवतां शिष्टमहापुरुषैं हेयत्वेन कथितमस्ति, स्वरूपतोऽतिसावद्यत्वेन गोहिंसावत् वेदविहितत्वेनाऽपि श्येनयागाऽग्निहोत्रादि सर्वयज्ञादिकर्म, चित्तशुद्धिजनकत्वाभावादिति वेदविहितत्वकारणेन, मनःशुद्धिहेतुना यज्ञादिकर्मरूपकर्मयोगोऽपि योगिनः, अध्ययनाध्यापनरूपब्रह्मयज्ञः-ज्ञानयज्ञ इतीच्छन्तः, कर्मयोगं ब्रह्मयज्ञत्वेनेच्छाविषयीकुर्वन्तो योगिनः श्येनयागं किं त्यजन्ति ? दुर्गतिदुष्कृतानुबन्धस्य, भयङ्करत्वेन बलवदनिष्टानु-

बन्धित्वेन यथा त्यजन्ति योगिनःतथा बलवदनिष्टानुबन्धित्वेन वेदविहितत्वेऽपि यज्ञादि सर्वं कर्म त्याज्यमेवेति तथा च वेदविहिता हिंसा निन्दितैव सम्यग्दर्शनज्ञानसंपन्नैरर्चिमार्गप्रपन्नैर्वेदान्तवादिभिश्च गर्हितत्वात् तथा च तत्त्वदर्शिनः "देवोपहारव्याजेन यज्ञव्याजेन ये घ्नन्ति जन्तून् गतघृणा घोरां यान्ति दुर्गतिम् "इति पठन्ति, वेदान्तिका अप्याहुः–'अन्धे तमसि मज्जामः, पशुभिर्ये यजामहे । हिंसा नाम भवेद्धर्मो, न भूतो न भविष्यति ॥' तथा अग्नि र्मामेतस्माद्धिंमाकृतादेनसो मुञ्चतु' छान्दसत्वाद् मोचयतु इत्यर्थः । व्यासेनाऽप्युक्तम्—

"ज्ञानपालिपरिक्षिप्ते, ब्रह्मचर्यदयाऽम्भसि । स्नात्वाऽतिविमले तीर्थे, पापपङ्कापहारिणि ॥
ध्यानाग्नौ जीवकुण्डस्थे, दममारुतदीपिते । असत्कर्मसमित्क्षेपैरग्निहोत्रं कुरूत्तमम् ॥
कषायपशुभि र्दुष्टै धर्मकामार्थनाशकैः । शममन्त्रहुतै र्यज्ञं विधेहि विहितं बुधैः ॥
प्राणिघातात् तु यो धर्ममीहते मूढमानसः । स वाञ्छति सुधावृष्टिं, कृष्णाहिमुखकोटरात् ॥" ॥२६॥

वेदान्तविधिशेषत्वं कर्मविधेर्हतम्—

वेदान्तविधिशेषत्वमतः कर्मविधेर्हतम् ।
भिन्नाऽऽत्मदर्शकाः शेषा, वेदान्ता एव कर्मणः ॥२७॥ ॥ २७ ॥

अध्यात्मो-
पनिषत्

॥ २८ ॥

अतः-वेदोक्तत्वेऽपि स्वरूपतोऽतिसावद्यत्वेन चित्ताऽशोधकत्वेन यज्ञादिरूपकर्मविधेः-कर्मविधानतः, वेदान्तोपनिषत्प्रतिपादितसम्यगाध्यात्मिकविधिशेषत्वं, (शेषत्वशब्दो मीमांसकानां पारिभाषिको वर्त्तते, मीमांसादर्शनस्य तृतीयेऽध्याये शेषत्वस्य लक्षणं दर्शितमस्ति, ततःप्राधान्यमथवाङ्गत्वमर्थो निर्णीयते, शेषत्वस्य व्याख्या 'शेषः पदार्थत्वात्'(मी.सू.३,१,२) सूत्रेण कृता विद्यते, परेषामुपयोगरूपार्थप्राप्तिरेव शेषत्वम् 'हीन्दीवेदान्तपरिभाषायां विवरणे) हतमकर्त्तव्यत्वेन स्वयमेव गतमेव 'कर्मणो भिन्नात्मदर्शका वेदान्ता शेषा एव'-कर्मतो भिन्नः-अन्य आत्मेति दर्शकाः-प्रतिपादका वेदान्ता उपनिषद एव शेषा उच्यन्ते, समीचीना आत्मनः-मनसःशुद्धिकारका वेदान्तोक्तविधयः सन्ति ते तु वेदोक्तिद्वारा यज्ञादिकर्मविधिना हता एव वेदान्तिन आहुः 'अन्धे तमसि मज्जामः, पशुभिर्ये यजामहे । हिंसा नाम भवेद्धर्मो न भूतो न भविष्यतीति (कर्मवादिपूर्वमीमांसकात्मवाद्युत्तरमीमांसकयोः सिद्धान्तभेददर्शनमत्र) ॥२७॥

स्वरूपतो निरवद्यकर्म, चित्तशुद्धिकारणम्—

कर्मणां निरवद्यानां, चित्तशोधकता परम् । ॥२८॥
साङ्ख्याचार्या अपीच्छन्ती-त्यास्तामेषोऽत्र विस्तरः ॥ २८ ॥

वेदोक्तत्वेऽपि स्वरूपतः सावद्ययज्ञादिकर्म, चित्तशुद्धिं प्रति प्रतिबन्धकं, हिंसाभावादिसंक्लिष्टपरिणामत्वादत एव यानि यानि निरवद्यकर्माणि तानि तानि मनसः शुद्धिं प्रति कारणानि, अहिंसाऽभयदानादिरूपात्यन्तकुशलपरिणामत्वात् कथ्यन्ते 'कर्मणां निरवद्यानां चित्तशोधकता परम्'=अवद्येन–पापेन रहितानां कर्मणां–तपोजपाऽध्ययनाध्यापनादीनां उत्कृष्टचित्तशोधकता मन्यमानाऽस्ति, एवं विषयं 'सांख्याचार्या अपि'=विष्णुप्रतिष्ठाकारकाश्चैतन्यप्रभृतिशब्दैरभिधीयन्ते, तेषां मत–वक्तारः कपिलासुरिपञ्चशि-
॥ २६ ॥ भार्गवोलूकादयः, ततः साङ्ख्याः कापिला इत्यादिनामभिरभिधीयन्ते (सांख्यास्तु हिंसाढ्यवेदविरता अध्यात्मवादिनः) साङ्ख्याचार्याः अपिनाऽन्ये बौद्धादयोऽपि जैनास्त्विच्छन्त्येव तत्र कः प्रश्नः ? अत्रैष विषयविस्तरः–शब्दप्रपञ्चः आस्तामलमित्यर्थः, शास्त्रपरीक्षायां छेदशुद्धिः समाप्ता ॥२८॥

**शास्त्रपरीक्षायां तापशुद्धिः प्रारभ्यते—**

यत्र सर्वनयाऽऽलम्बि—विचारप्रबलाग्निना ।
तात्पर्यश्यामिका न स्यात्, तच्छास्त्रं तापशुद्धिमत् ॥२९॥

यत्र–यस्मिन् शास्त्रे 'सर्वनयाऽऽलम्बिविचारप्रबलाग्निना'=सर्वे च ये नैगमाद्या नयास्तेषामालम्बिनो ॥ २९ ॥
(तानालम्ब्य) ये विचारास्ते (स्याद्वादयुतभावाः) एव प्रबल–प्रकृष्टबलवानग्निस्तेन, तात्पर्ये–ऐदम्पर्ये–

अध्यात्मोपनिषत्

॥ ३० ॥

निष्कर्ष—अन्तिमतत्त्वनिश्चयात्मकज्ञाने श्यामिका—श्यामत्वं न, (हेम्नो संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि चेति रघुवंशे) 'तच्छास्त्रं तापशुद्धिमत्' तदेव शास्त्रं तापशुद्धिनामकपरीक्षायामुत्तीर्णमिति ॥२९॥

स्याद्वादसिद्धिकृते सोमिलप्रश्नोत्तरौ भगवत्याम्—

यथाऽऽह सोमिलप्रश्ने, जिनः स्याद्वादसिद्धये ।
द्रव्यार्थादहमेकोऽस्मि, दृग्ज्ञानार्थादुभावपि ॥ ३० ॥
अक्षयश्चाऽव्ययश्चास्मि, प्रदेशार्थविचारतः ।
अनेकभूतभावात्मा, पर्यायार्थ—परिग्रहात् ॥ ३१ ॥

सोमिलप्रश्नः=(भग. सू. शतक १८, ३.–१०) एको भवान् ? द्वौ भवान् ? अव्ययो भवान् ? अवस्थितो भवान् ? अनेकभूतभावभविको भवान् ? इति सोमिलप्रश्ने जिनो महावीरः स्याद्वादसिद्धये प्राह=हे सोमिल ! एकोऽप्यहं यावदनेकभूतभावभविकोऽप्यहं, अथ केनाऽर्थेन भदन्त ! एवमुच्यते यावद् भविकोऽप्यहं, सोमिल ! द्रव्यार्थतया एकोऽहं, ज्ञानार्थतया च दर्शनार्थतया द्वौ अहम् , प्रदेशार्थतया अक्षयोऽप्यहम् , अव्ययोऽप्यहम् , अवस्थितोऽप्यहम् , उपयोगार्थतया अनेकभूतभावभविकोऽप्यहम् , तत्तेनाऽर्थेन यावद् भविकोऽहमिति 'सूत्रच्छाया । भगवतीटीकायां=तत्र भगवता स्याद्वादस्य निखिलदोषगो- ॥ ३० ॥

चरातिक्रान्तत्वात्तमवलम्ब्यात्तरमदायि, जीवद्रव्यस्यैकत्वेनैकोऽहं, न तु प्रदेशार्थतया तथाह्यनेकत्वान्ममेत्यवयवादीनामनेकत्वोपलम्भो न बाधकः । तथा कञ्चित्स्वभावमाश्रित्यैकत्वसङ्ख्याविशिष्टस्याऽपि पदार्थस्य स्वभावान्तरद्वयापेक्षया द्वित्वमपि न विरुद्धमित्युक्तं 'नाणदंसण दयाए दुवेऽपि' ज्ञानदर्शनद्वयापेक्षया द्वौ अप्यहं, न चैकस्य स्वभावभेदो न दृश्यते, एको हि देवदत्तादिःपुरुष एकदैव तत्तदपेक्षयाऽपि पितृत्वपुत्रत्वभ्रातृत्वभ्रातृव्यत्वादीननेकान् स्वभावांल्लभत इति । तथा प्रदेशानां क्षयाभावात्तथाऽव्ययोऽप्यहं, कतिपयानामपि च व्ययाभावात् , किमुक्तं भवति, अवस्थितोऽप्यहं, नित्योऽप्यहं, असङ्ख्येयप्रदेशिता हि न कदाचनाऽपि व्यपैति, अतो नित्यताऽभ्युपगमेऽपि न दोषः । तथा 'उपयोगदयाऐत्ति'–विविधविषयानुपयोगानाश्रित्यानेकभूतभावभविकोऽप्यहं, अतीतानागतयो र्हि कालयोरनेकविषयबोधानामात्मनः कथञ्चिद् भिन्नानां भूतत्वाच्चेत्यनित्यपक्षोऽपि न दोषायेति । अनेके भूता-अतीता भावाः सत्तापरिणामा भव्याश्च भाविनो यस्य सोऽनेकभूतभावभविकोऽप्यहम् । श्लोकार्थस्त्वेवम्–'द्रव्यार्थादहमेकोऽस्मि'=अहमित्यात्मद्रव्यस्यापेक्षयैकोऽस्मि-एकत्वसंख्याविशिष्टोऽहमात्मेति, 'दृग्ज्ञानार्थादुभावपि' दर्शनस्वभावपेक्षया च ज्ञान स्वभावापेक्षया द्वौ अप्यहम् द्वित्वसंख्याविशिष्टोऽहमिति, ममासंख्येयप्रदेशाऽपेक्षया क्षयाभावान्नित्योऽहम् व्ययाभावादखण्डोऽहम्-नित्यत्वाखण्डत्वविशिष्टोऽहं उपयोगरूपपर्यायापेक्षया अनेकभूत(भावि) भवत्कालीनानेकविषयकबोधभावरूपोपयोगापेक्षया 'अनेकभूतभावात्मेति', पर्यायापेक्षया नानाविधभूतभाविकालीन-

नानाविषयबोधोपयोगापेक्षया कथंचिदनित्यत्वविशिष्टोऽप्यहमिति ('उत्पादव्यय ध्रौव्ययुक्तं सत्, तद्भावः सत्तेत्यर्थः) ॥३०॥३१॥

**नयविषयकैकान्तबुद्धितोऽप्यनेकान्तो न याति—**

॥ ३२ ॥ द्वयोरेकत्व-बुद्ध्याऽपि, यथा द्वित्वं न गच्छति ।
नयैकान्तधियाऽप्येव-मनेकान्तो न गच्छति ॥३२॥

न्यायमते,यथा द्वयोः-वस्तुद्वये वा वस्तुनिष्ठधर्मद्वये एकत्वबुद्ध्याऽपि-एकत्वावगाहिज्ञानेनापि (किं द्वित्वावगाहिबुद्ध्यात्वित्यपिशब्दार्थः) (अयमेकः अयमेकः इत्याकारिकापेक्षाबुद्धिजन्यं) एवं तथा प्रकृते अनन्तधर्माऽवच्छिन्ने वस्तुनि, नयप्रक्रियया नयनिष्ठैक-निर्णयात्मकबुद्ध्याऽपि, अनेकान्तः-स्याद्वादः अनन्तधर्मावच्छिन्नत्वं न गच्छत्यपि तु तिष्ठत्येव । ३२॥

**सामस्त्यद्वारा प्रमाणभूतो नयो न स्यात्—**

सामग्र्येण न मानं स्याद्, द्वयोरेकत्वधीर्यथा । ॥ ३२ ॥
तथा वस्तुनि वस्त्वंशबुद्धिर्ज्ञेया नयात्मिका ॥ ३३ ॥

यथा द्वयो-र्वस्तुनोर्वा वस्तुधर्मयोः एकत्वबुद्धि र्न मानं (प्रमाणं) स्यात् यतः सामग्र्येण=समग्रस्य भावः सामग्र्यं-सामस्त्यं तेन मानं न भवेत् (न्यायमते)

तथा-तेन प्रकारेण वस्तुनि-अनंतधर्माऽवच्छिन्ने पदार्थे वस्तुगतांशबुद्धि र्नयाऽत्मिका-जैनशासने नयस्वरूपा ज्ञेया-ज्ञानपथं नेयेति जैनशासनशास्ता जिनो जगन्नाथोऽपि दुर्नयतिरस्कारेण भव्येभ्यो नयप्रमाणमार्गं प्ररूपयति यथा 'अस्तिघटः' इति घटे स्वाऽभिमतमस्तित्वधर्मं प्रमाथयन् शेषधर्मेषु गजनिमीलिकामालम्बते न चास्य दुर्नयत्वं, धर्मान्तरा-तिरस्कारात्, न च प्रमाणत्वं स्याच्छब्देनालाञ्छितत्वात्। 'स्यात्सदि' ति कथञ्चित् सद्वस्तु इति प्रमाणम्। मुख्यवृत्त्या प्रमाणस्यैव प्रामाण्यं यच्च अत्र नयानां प्रमाणतुल्यकक्षताख्यापनं तत्तेषामनुयोगद्वारभूततया प्रज्ञापनाऽङ्गत्वख्यापनार्थम्। तत्र प्रमाणप्रतिपन्नार्थैकदेशपरामर्शो नयः। अनन्तधर्माऽध्यासितं वस्तु, स्वाभिप्रेतैकधर्मविशिष्टं नयति प्रापयति संवेदनकोटिमारोहयतीति नयः, प्रमाणप्रवृत्तेरुत्तरकालभावी परामर्श इत्यर्थः। नयाश्चानन्ताः, अनन्तधर्मत्वाद् वस्तुनः। प्रमाणं तु सम्यगर्थनिर्णयलक्षणं सर्वनयात्मकमिति स्याच्छब्दलाञ्छितानां नयानामेव प्रमाणव्यपदेशभाक्त्वादिति ॥३३॥

एकदेशेनैकत्वधीर्द्वयोः प्रमाणभूता तथा प्रकृतेऽपि—

एकदेशेन चैकत्वधीर्द्वयोःस्याद्यथा प्रमा ।
तथा वस्तुनि वस्त्वंश-बुद्धिर्ज्ञेया नयात्मिका ॥३४॥

न्यायमते-यथा द्वयोर्वस्तुनो र्वावस्तुधर्मयोः, एकदेशेन-अयमेकः-अयमेक इत्याकारका-पेक्षाबुद्धिजन्ययोर्द्वयोरेकदेशेन-एकांशेन एकत्वबुद्धिः-प्रमात्मिका-सत्यज्ञानरूपा तथाऽनन्तधर्माऽवच्छिन्ने वस्तुनि वस्तुनिष्ठनित्यत्वाद्यंशबुद्धि-र्नयात्मिका-प्रमाणांशरूपा ज्ञेयेति ॥३४॥

परो वादी नयानां संशयत्वं भाषते तस्य निरासश्च—

इत्थं च संशयत्वं यद् नयानां भाषते परः ।
तदपास्तं विकल्पानां, प्रत्येकं न नयेषु यद् ॥३५॥

परस्तीर्थान्तरीयः,'नयानां संशयत्वं यद् भाषते' संशयस्य लक्षणमिदमस्ति एकधर्मिणि विरूद्धनानाधर्मवैशिष्ट्याऽवगाहिज्ञानं संशयः, एकस्मिन् पुरो वर्तिनि पदार्थे विरुद्धा व्यधिकरणा ये नानाधर्माः स्थाणुत्वपुरुषत्वादयस्तेषां वैशिष्ट्यं सम्बन्धस्तदवगाहिज्ञानं संशयः, यथा स्थाणु र्वा पुरुषो वेत्यत्र स्थाणुत्व-स्थाणुत्वाभाव-पुरुषत्वपुरुषत्वाभावकोटिक एव संशयः, भावद्वयकोटिकसंशयाप्रसिद्धेः,

अत्रानन्तधर्माऽवच्छिन्ने वस्तुनि इत्थं वस्त्वंशबुद्धिः-एकधर्मांशकोटिक-ज्ञानवत्त्वेन नयानां संशयत्वं न, यदि विरुद्धकोटिद्वयावगाहि यथा सन् वेत्यादि स्यात्तदा संशयत्वमत्र नयानां तु, सदिति सत्त्वाद्यवगाहिज्ञानं यथार्थमस्ति कथं संशयः ? परः-तीर्थान्तरीयः, नयानां यत् संशयत्वं भाषते तद् इत्थं वस्त्वंशबुद्धिद्वारा प्रत्येकं विकल्पानां-वस्त्वंशधर्मात्मकश्रुतविकल्पानां संशयत्वं,एकधर्मावगाहित्वेन दूरीकृतं परंतु यतःनयेषु-नयसमुदायात्मके-नानाधर्मावच्छिन्ने सापेक्षविरुद्धनानाधर्मविशिष्टे स्याद्वादे संशयत्वं दूरीकृतमस्तीत्यर्थः ॥३५॥

परधर्मतिरस्काररूपविरोधाभावे नयसमुदायोऽहतो विजयते जीवन्—

सामग्र्येण द्वयाऽलम्बे-प्यविरोधे समुच्चयः ।
विरोधे दुर्नयव्राताः, स्वशस्त्रेण स्वयं हताः ॥३६॥

न्यायमते सामग्र्येण-सामस्त्येन 'द्वयाऽऽलम्बे' द्वित्वविशिष्टवस्तुद्वयालम्बने-एकत्वबुद्धिद्वित्वबुद्धिवैशिष्ट्यं पूर्णं भासते तथा परधर्मतिरस्काररूपविरोधाभावे नयसमुच्चयोऽप्रतिहतो जीवन् विजयते,'विरोधे दुर्नयव्राताः स्वशस्त्रेण स्वयं हताः' परधर्मतिरस्कारे सति दुर्नयानां-नयाभासानां समुदायाः, एकान्तवादरूपस्वशस्त्रेण स्वयं हताः-अनेकान्तवादामृतपानपराङ्मुखाः अनेकान्तश्रद्धाशून्याः सत्यमार्गतो भ्रष्टा इत्यर्थः

॥ ३५ ॥

एवं न 'कण्टकेषु क्षुद्रशत्रुष्वेकान्तवादिषु परस्परध्वंसिसु सत्सु परस्परस्मात् ध्वंसन्ते विनाशमुपयान्त्येवंशीला सुन्दोपसुन्दवदिति परस्परध्वंसिनः, तेषु हे जिन ? ते तव शासनं स्याद्वादप्ररूपणनिपुणं द्वादशाङ्गीरूपं प्रवचनं, पराभिभावुकानां कण्टकानां स्वयमुच्छिन्नत्वेनैवाभावात् , अधृष्यमपराभवनीयं जयति-सर्वोत्कर्षेण वर्तते' इति' ॥३६॥

**प्रत्येकं मिथो विरुद्धानां स्याद्वादसमुच्चये न विरोधः—**

कथं विप्रतिषिद्धानां, न विरोधः समुच्चये ? ।
अपेक्षाभेदतो हन्त कैव विप्रतिषिद्धता ॥३७॥

'विप्रतिषिद्धानां' सत्त्वविरुद्धमसत्त्वमसत्त्वविरुद्धं सत्त्वं परस्परविरुद्धसत्त्वादि-धर्माणां स्याद्वादरूप-समुच्चये-अनेकविधधर्माऽवच्छिन्नपदार्थे विरोधो-सहानवस्थानलक्षणो विरोधो न, सत्त्वाऽसत्त्वयोरितरेतरम-विष्वग्-अभिन्न भावेन वर्त्तनात् । न हि घटादौ सत्त्वमसत्त्वंपरिहृत्य वर्त्तते, पररूपेणाऽपि सत्त्व प्रसङ्गात् । न चासत्त्वं सत्त्वं परिहृत्य वर्त्तते, स्वरूपेणाऽप्यसत्त्वप्राप्तेः । तदा हि विरोधःस्याद् यद्येकोपाधिकं सत्त्वमसत्त्वं च स्यात् । न चैवम् । यतो नहि येनैवांशेन सत्त्वं तेनैवासत्त्वमपि किन्त्वन्योपाधिकं सत्त्वम् , अन्योपाधिकमसत्त्वं स्वरूपेण सत्त्वं पररूपेण चासत्त्वम् । 'अपेक्षाभेदतो हन्त, कैव विप्रतिषिद्धता'=

अपेक्षाया-स्वरूपपररूपाद्यपेक्षाया भेदतो-विभागतः-विशेषतः हन्तेति खेदे संभ्रमे वा 'कैव विप्रतिषिद्धता ? न कोऽपि सहानवस्थानरूपी विरोधगन्धोऽपि अर्थादभिन्नभावेनाऽपेक्षाभेदत एकत्र विरुद्धधर्माणां समावेशः सम्भवतीति ॥३७॥

व्यावहारिकोदाहरण-पूर्विकाऽपेक्षावादतः स्याद्वादसिद्धिः—

भिन्नाऽपेक्षा यथैकत्र, पितृपुत्रादिकल्पना ।
नित्या-नित्याद्यनेकान्तस्तथैव न विरोत्स्यते ॥ ३८ ॥

यथा, एकत्र-एकपुरुषव्यक्तौ, 'भिन्नापेक्षा' भिन्नाः-अन्याः, अपेक्षाः-उपाधयः-अवच्छेदकाः-अंशप्रकारा इति यावत् यस्यां सा, कल्पना भिन्नापेक्षा कथ्यते, 'पितृपुत्रादिकल्पना'-अत्र कल्पना विचारधारा ज्ञेया, एकस्यैव पुंसस्तत्तदुपाधिभेदात् पितृत्व-पुत्रत्व मातुलत्व-भागिनेयत्व-पितृव्यत्व-भ्रातृव्यत्वादिधर्माणां परस्परविरुद्धानामपि प्रसिद्धिदर्शनात् ,

तथैव-तेन प्रकारेणैव-अपेक्षाभेदरूपप्रकारद्वारा नित्या-नित्याद्यनेकान्तः=मिथोविरुद्धनित्यानित्यसत्त्वासत्त्वाद्यनेक-अनन्तधर्माऽवच्छिन्नत्वरूपानेकान्तवादो 'न विरोत्स्यते'-न सहानवस्थानरूपविरोधपदं प्राप्स्यति ॥ ३८ ॥

अनेकान्ते व्यापके सति सर्वत्र निर्णयज्ञानं—

व्यापके सत्यनेकान्ते, स्वरूपपररूपयोः ।
आनेकान्त्यान्न कुत्रापि, निर्णीतिरिति चेन्मतिः ॥३९॥
अव्याप्यवृत्तिधर्माणां, यथाऽवच्छेदकाश्रया ।
नाऽपि ततः परावृत्तिस्तत् किं नाऽत्र तथेष्यते ? ॥ ४० ॥

'अनेकान्ते व्यापके सति' यथा हि न्यायैकनिष्ठे राजनि राज्यश्रियं शासति सति सर्वाः प्रजास्तन्मुद्रां नातिवर्त्तितुमीशते, तदतिक्रमे तासां सर्वार्थहानिभावात् , एवं विजयिनि निष्कण्टके स्याद्वादनरेन्द्रे तदीयमुद्रां सर्वेऽपि पदार्था नातिक्रामन्ति तदुल्लङ्घने तेषां स्वरूपव्यवस्थाहानिप्रसक्तेस्तथा च नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगमरूपस्याद्वादमर्यादाया व्यापकत्वं—व्याप्ति—द्रव्यपर्यायात्मकत्वस्वभावाऽवच्छिन्नत्वं सर्वत्र वस्तुनि सदा वर्त्तते अर्थात् स्वरूपपररूपयोः—स्वरूपावच्छेदेन च पररूपावच्छेदेन सत्त्वासत्त्वाद्यनेकधर्मावच्छिन्नस्वरूपानेकान्ते व्यापके—सर्ववस्तुव्यापके सति, अनेकान्तस्य भाव आनेकान्त्यं तस्मादानेकान्त्यात्—कस्यचिदेकस्य सत्त्वस्य वाऽसत्त्वस्यान्तस्य निर्णयस्याभावात् कुत्रापि—कस्मिंश्चित् पदार्थे सत्त्वविषयिणी वाऽसत्त्वविषयिणी निर्णीतिः-निर्णयो नेति चेद्-यदि मतिर्बुद्धिस्तव तदोच्यते 'अव्या-



॥ ३८ ॥

प्यवृत्तिधर्माणां यथाऽवच्छेदकाश्रया'=विरुद्धतथाभासमानैरनेकैर्धर्मैर्मिश्रितस्य वस्तुनोऽपेक्षां विना विपक्षितैकधर्मप्रकारकनिश्चयविषयीकरणासंभवः । न चापेक्षां विना लौकिकोऽपि व्यवहारः सङ्गच्छते, अग्रावच्छेदेन कपिसंयोगाभाववति वृक्षे शाखाऽपेक्षयैव कपिसंयोगवत्त्वव्यवहारात् ।
'अव्याप्यवृत्तित्वं-तदधिकरणक्षणाऽवच्छेदेन तत्समानाधिकरणाऽत्यन्ताभावप्रतियोगित्वरूपं, एवं ज्ञानादीनामपि, ज्ञानादिकं यदात्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽस्त्येवेति' ।

यथाऽव्याप्यवृत्तिधर्माणा-संयोगादिविशेषगुणादिघटत्वद्रव्यत्वनीलभेदा-भेदादिरूपाऽव्याप्यवृत्ति-
॥ ३१ ॥ धर्माणां निर्णीतिः, अवच्छेदक आश्रयो यस्यां साऽवच्छेदकाश्रया यथा अग्रस्थानरूपावच्छेदकं प्रतीत्य वृक्षे कपिसंयोगाभावो वर्त्तते शाखास्थानरूपावच्छेदकमपेक्ष्य कपिसंयोगो वर्त्तते ।

'एकत्र वृत्तौ हि विरोधभाजोः, येषामवच्छेदकभेदयाञ्चा ।

द्रव्यत्वपर्यायतयो र्विभेदं, विजानतां सा कथमस्तु वस्तु ॥' नीलभेदो घटत्वावच्छेदेन नीलाभे-
दस्तु नीलत्वद् भिन्नभेदाऽवच्छेदेनेति भेदाभेदवादे । स्याद्वादे तु पूर्वोत्तराकार (पर्याय) परिहारस्वीकार ॥ ३६ ॥
(द्रव्यत्वेन) स्थितिलक्षणपरिणामेन भावानामर्थक्रियोपपत्तिरविरुद्धा । न चैकत्र वस्तुनि परस्परविरुद्धधर्माध्यासाऽयोगादसन् स्याद्वाद इति वाच्यम् ।

एकान्तनित्यानित्यपक्षविलक्षणस्य पक्षान्तरस्या(कथंचिन्नित्यानित्यरूपजात्यन्तरस्य)ङ्गीक्रियमाणत्वात्, तथैव न मर्वैरनुभवात् । तथा च पठन्ति । 'भागे सिंहो नरो भागे,योऽर्थो भागद्वयाऽऽत्मकः' । तमभागं विभागेन नरसिंहं प्रचक्षते इति, प्रकृते हि न्यायमते यथाऽव्याप्यवृत्तिधर्माणां, अवच्छेदकरूपाश्रयद्वारा निर्णीतिः–निर्णयोऽस्ति, तथा च ततोऽन्याप्यवृत्तिधर्माणां, ततः–अवच्छेदकरूपाश्रयतः परावृत्तिः–परिवर्त्तनमपि (श्रेष्ठानेकान्तवृत्तिः) न भवति, तद्वस्तु, तथा–तेन प्रकारेणाऽत्रापेक्षाभेदतो नानाविरुद्धधर्मावच्छिन्नत्वविशिष्ट स्याद्वादे किं न भवद्भिरीक्ष्यते ? सम्यगीक्ष्यतां तुलनाक्रियतां यथार्थरीत्या अनेकान्तवादतः सर्वत्र निर्णय एवेति ; ३६॥४०॥

अभिप्रेतधर्माश्रयेणैव नयेषु निर्णयो व्यवहारी—

आनैगमान्त्यभेदं तत्, परावृत्तावपि स्फुटम् ।
अभिप्रेताऽऽश्रयेणैव, निर्णयो व्यवहारकः ॥४१॥

नैगमनयादारभ्यैवंभूतनामकपर्यन्तभेदवन्नयचक्रं तत् स्पष्टमन्ततो गत्वा प्रमाणत्वप्राप्तिरूपपरिवर्त्तनेऽपि अपेक्षाभेदवद् भवति तथाहि 'अभिप्रेताश्रयेणैव निर्णयो व्यवहारकः' तत्र नयचक्रे परावृत्तौ सत्यामपि, स्वस्वाभिप्रेतधर्ममाश्रित्य निर्णयः-प्रमाणत्वं, व्यवहारकः-व्यवहारकारको भवति नान्यथेति ॥४१॥

अनेकान्तेऽप्यनेकान्तात् कथं न परावृत्तिः ?—

अनेकान्तेऽप्यनेकान्ता-दनिष्टैवमपाकृता ।
नयसूक्ष्मेक्षिकाप्रान्ते, विश्रान्तेःसुलभत्वतः ॥ ४२ ॥

एवम् अपेक्षाभेदतोऽभिप्रेताश्रयेणैव निर्णयो व्यवहारकारी भवत्यतः अनेकान्तेऽपि-अनेकान्तपदेऽपि अनेकान्ततःपरावृत्तिः-एकान्ते परिवर्त्तनमनिष्टत्वेनापाकृतं·खण्डितमेव यतो नयविषयकसूक्ष्मेक्षिकायाः प्रान्ते विश्रान्तेःप्रमाणत्वप्राप्तेः सुलभत्वहेतोः, अनेकान्ततोऽनेकान्तपरावृत्तिरनिष्टत्वेनैवाऽपाकृतेति,

(अनेकान्तव्यवस्था प्रकरणे, पृ ८३=ननु सर्वत्रानेकान्त इति नियमेऽनेकान्तेऽप्यनेकान्तादेकान्त-प्रसक्तिरिति चेदत्र वदन्ति, 'भयणाविहुभइयव्वा, जहभयणासव्वदव्वाइं । एवं भयणानियमोऽविहोइसमया-विरोहेण ॥३२७॥ यथा भजनाऽनेकान्तो, भजते सर्ववस्तूनि तदेतत्स्वभावतया ज्ञापयति तथा भजनाऽपि अनेकान्तोऽपि, भजनीया-अनेकान्तोऽप्यनेकान्त इतीष्टमस्माकं इति नयप्रमाणापेक्षयैकान्तश्चानेकान्तश्चे-त्येवमसौ ज्ञापनीयः । तथाहि नित्यानित्यादिशबलैकस्वरूपे वस्तुनि नित्यत्वानित्यत्वाद्येकतरधर्माऽवच्छे-दकावच्छेदेनैकतरधर्मात्मकत्वमुभयाऽवच्छेदेन चोभयात्मकत्वं तथा नित्यानित्यादि-सप्तधर्मात्मकत्व- 
प्रतिपादकतापर्याप्त्यधिकरणेऽनेकान्तमहावाक्येऽपि सकलनयवाक्यावच्छेदेनोक्तरूपमनेकान्तात्मकत्वं प्रत्ये-

क्रमणाक्याऽनवच्छेदेन चैकान्तात्मकत्वं न दुर्वचमिति भावः। एतदेवाह-एवमुक्तरीत्या भजनाऽनेकान्तः सम्भवति, नियमश्चैकान्तश्च, समयस्य सिद्धान्तस्य "रयणप्पभासिय सासया सिय असासया"-इत्येवमनेकान्तप्रतिपादकस्य-"दव्वट्ठयाए सासयापज्जवट्ठए असासया" इत्येवं चैकान्ताभिधायकस्याविरोधेन न चैवमव्यापकोऽनेकान्तवादः, स्यात्पदसंमुचितानेकान्तगर्भस्यैवैकान्तस्वभावत्वादनेकान्तस्यापि स्यात्कारलाञ्छनैकान्तगर्भस्यानेकान्तस्वभावत्वात् न चानवस्था देशकात्स्न्याभ्यामवयवावयविरूपस्य वस्तुन इव स्याद्वादस्याऽप्येकान्ताऽनेकान्तात्मकस्यैव प्रमाणादेव प्रतीतेः) ॥४२॥

प्रमाणसिद्धार्थाद् दोषाणानवकाशत्वम्—

'आत्माश्रयादयोऽप्यत्र, सावकाशा न कर्हिचित्।
ते हि प्रमाणसिद्धार्थात्, प्रकृत्यैव पराङ्मुखाः ॥४३॥

य एव दोषाःकिल नित्यवादे, विनाशवादेऽपि समास्ते एव अर्थात् नित्यैकान्तवादे य एव दोषा अनित्यैकान्तवादिभिः प्रसञ्जिताः क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तिविरोधव्यभिचारादयः त एव विनाशवादेऽपि क्षणिकैकान्तवादेऽपि समास्तुल्याः, नित्यैकान्तवादिभिः प्रसज्यमाना अन्यूनाधिकाः। सामान्यविशेषाद्येकान्तवादेषु समा दोषा ज्ञेयाः, तथा विरोध-वैयधिकरण्य-अनवस्था-संकर-व्यतिकरसंशयाप्रतिपत्तिविषयव्यवस्थाहानीत्यादयो दोषाः परोद्भाविताःस्याद्वादस्य जात्यन्तरत्वाद्निरवकाशा एव,

एवं च 'ऽत्रापि आत्माश्रयादयो न कर्हिचित् सावकाशाः' अर्थात् कदाचनाऽत्रापि–जात्यन्तररूपेऽनेकान्तवादे आत्माश्रयान्योन्याश्रयानवस्थादिदोषा आत्माश्रयः=स्वस्य स्वापेक्षितत्वेऽनिष्टप्रसंगस्तर्कदोषः, परस्परज्ञानमापेक्षज्ञानाश्रयोऽन्योऽन्याश्रयः तर्कदोषः, अनवस्था=यथा क्लृप्तवस्तुसजातीयवस्तुपरम्पराकल्पनस्य विरामाभावः यथा जातौ जात्यन्तरं तत्रापि जात्यन्तरं इत्येवं तत्र तत्र जात्यंतरस्वीकारेऽनवस्था. अवकाशेन-स्थानेन सहिताः सावकाशा न, कथमिति चेत् 'ते हि प्रमाणसिद्धार्थात् प्रकृत्यैव पराङ्मुखाः'=प्रमाणतया प्रतिष्ठाप्राप्तस्याद्वादरूपार्थतः प्रकृत्या–स्वभावत एव, ते–आत्माश्रयादिदोषाः, पराङ्मुखा विमुखाः-वैमुख्यकारिण एव ॥ ४३ ॥

स्याद्वादस्य द्वेषी जनो कः ? —

उत्पन्नं दधिभावेन, नष्टं दुग्धतया पयः ।
गोरसत्वात् स्थिरं जानन्, स्याद्वादद्विट् जनोऽपि कः ॥ ४४ ॥

गोरसरूपं पयो, दुग्धत्वेन नष्टं सत्, दधिभावेन–दधित्वेनोत्पन्नं सत्, गोरसत्वेन स्थिरं–ध्रुवं जानन् को जनोऽपि स्याद्वादद्वेषी स्यात् ? अपितु न कोऽपि जनः स्याद्वादद्वेषी स्यादेव यथा गोरसं दुग्धतया विनश्यद् दधितयोत्पद्यमानं गोरसतया तिष्ठत्येव, अर्थात् गोरसे स्थायिनि पूर्वदुग्धपरिणामविनाशो-

तदधिभावोत्पादौ सम्भवन्तौ प्रत्यक्षादिप्रमाणबलेनोपलब्धौ तौ च कथमपह्नोतुं पार्येते ? एवं पदार्थसार्थे स्याद्वादरूपमुत्पादव्ययध्रौव्यभावं पश्यन्तु शेमुषीमुख्याः । ततः सिद्धं त्रयात्मकं वस्तुतत्त्वमिति ॥ ४४ ॥

कापिलोऽनेकान्तवादे स्वमतं दर्शयति—

इच्छन् प्रधानं सत्त्वाद्यै-र्विरुद्धै गुंम्फितं गुणैः ।
साङ्ख्यः संख्यावतां मुख्यो, नाऽनेकान्तं प्रतिक्षिपेत् ॥ ४५ ॥

सङ्ख्यावतां–विदुषां मुख्यः–प्रधानः, साङ्ख्यः–कापिलः, प्रधानं प्रकृतिं महदाद्युत्पादमूलहेतुभूतं सत्त्वरजस्तमोभिर्गुणैरन्योऽन्यविरोधदुर्धरैरपि 'गुम्फि'–ग्रथितमविरुद्धतयाऽभिदधानः स्वात्मनो नाऽनेकान्तमतवैमुख्यमाख्याति, तन्मते हि प्रकृतिरेका महदाद्यात्मिका अनेकाऽऽकारा अभ्युपगम्यते ततः साङ्ख्योऽप्यनेकान्तमतसम्मुख एव ।

तत्र सत्त्वरजस्तमोरूपगुणत्रयस्यार्थः=सत्त्वगुणेन वदननयनादिप्रसन्नता, प्रसादकार्य–लिङ्गं स्यात्, रजोगुणेन तोषः स चाऽऽनन्दपर्यायः 'तल्लिङ्गानि स्फूर्त्यादीनि,' तमोगुणेन च दैन्यं जन्यते वदनविच्छायतानेत्रसंकोचादिव्यङ्ग्यं दैन्यं, आदिशब्देनाध्यात्मिकाधिदैवताधिभौतिकं दुःखमाक्षिप्यते.

(विरुद्धैः=सत्त्वाद्यैः–सत्त्वरजस्तमोभिः प्रीत्यप्रीतिविषादात्मकतया लाघवोपष्टम्भगौरवधर्मतया विलक्षण

स्वभावैः-गुणै गुंम्फितं=तत्साम्याऽवस्थात्वमापन्नं, प्रधानमङ्गीकुर्वन् सांख्यो यद्यनेकान्तं प्रतिक्षिपेत्तदा न संख्यावतां परीक्षकाणां मुख्यः, तत्प्रतिक्षेपे स्वाभिमतप्रधानस्यैव विलयेन स्वाधिरूढशाखाच्छेदन-कौशलशालित्वात्तस्य सङ्ख्यावतामिति निर्धारणे षष्ठी । यदि तु संख्यावतां मध्ये मुख्यस्तदाऽनेकान्तं न प्रतिक्षिपेदेव । ) महोपा. यशो वि. गणी. ॥ ४५ ॥

अनेकान्ते बौद्ध-संमतिमाविष्करोति—

विज्ञानस्यैकमाकारं, नानाऽऽकारकरम्बितम् ।
इच्छंस्तथागतः प्राज्ञो, नानेकान्तं प्रतिक्षिपेत् ॥ ४६ ॥

विज्ञानस्य-संविद एकमेव स्वरूपं, नानाचित्रपटाद्यनेकाकारमिश्रं समभिलषन्, बौद्धो नाऽनेकान्तं निराकुर्यात्, अत एव प्राज्ञः, "ज्ञानाद्वैतवादिनां हि मते एकमेव चित्रज्ञानं, ग्राहकं तस्य चांशा ग्राह्याः, इत्येकस्यैव ग्राहकत्वं चाऽभ्युपगच्छन्, कथमनेकान्तवादं निराकुर्यात्" यदि प्रकर्षेणाऽज्ञो न स्यात् यत एकत्र चित्रपटीज्ञाने नीलानीलयोः, परस्परविरुद्धयोरप्यविरोधेनोररीकारात् । तस्मात्तथागतैरभ्युपगत एव स्याद्वादः ॥ 'विज्ञानस्य'=संविदः, एकमाकारं-स्वरूपं, नानाकारकरम्बितम्=चित्रपटाद्यनेकाकार मिश्रितम्, इच्छन्=अभ्युपगच्छन्, तथागतो=बौद्धो, नानेकान्तं प्रतिक्षिपेत् निराकुर्यात् तस्याऽनेकान्तवाद-निराकरणं न बलवदनिष्टाननुबन्धीत्यर्थः । स हि परमाणौ मानाभावात्तत्सिद्ध्यधीनस्थूलाऽवयवित्वस्या

ऽप्यसिद्धे नीलादेः प्रतिभासत्वान्यथाऽनुपपत्त्या, विषयं विनाऽपि वासनामात्रेण धियो विशेषाच्च ज्ञानाद्वैतमेव स्वीकुरुते तच्च ज्ञानं ग्राहकतयैकस्वभावमपि ग्राह्यतयाऽनेकीभवतः स्वांशान् गृह्णदनेकमपि, इति कथं न तस्यानेकान्तवादिकक्षापञ्जरे प्रवेशः ? । उ यशो वि.म. ॥४६॥

स्याद्वादे नैयायिकवैशेषिकयोः संवादः—

चित्रमेकमनेकं च, रूप प्रामाणिकं वदन् ।
यौगो वैशेषिको वाऽपि, नाऽनेकान्तं प्रतिक्षिपेत् ॥४७॥

एकं चित्रं रूपं तत्रैव चानेकाकाररूपं प्रामाणिकं-प्रमाणसिद्धं वदन्तावक्षपादकणादौ न स्याद्वादं निराकुरुतः । तेषां हि मते मेचकज्ञानमेकमनेकाकारमुररीक्रियते, यतस्तेषामेवं सिद्धान्तसिद्धिः, 'एकस्यैव चित्रपटादेश्चलाचलरक्तारक्तावृतानावृताद्यनेकविरुद्धधर्मोपलम्भेऽपि दुर्लभो विरोधगन्धः', तस्मादस्मद्वद् यौगवैशेषिकावप्यनेकान्तमताऽनुमतिं वितन्वन्तौ स्तः स्वयं हि ये एकत्र घटे व्याप्यवृत्त्येकं चित्रमव्याप्यवृत्तिचित्रान्तरं चाभ्युपगच्छन्ति तेषामनेकान्तवादाऽनादरो न ज्यायानिति भावः ॥४७॥

गुरुरपि स्याद्वादं सन्मानयति—

प्रत्यक्षं मितिमात्रंशे, मेयांशे तद्विलक्षणम् ।
गुरु र्ज्ञानं वदन्नेकं, नाऽनेकान्तं प्रतिक्षिपेत् ॥४८॥

मितिश्च माता च, मितिमातरौ-तयोरंशे-भागे=प्रमाणफलरूपप्रमितिरूपांशे विशिष्टज्ञातृरूपप्रमातृरूपांशे च प्रत्यक्षं तथा मेये-प्रमेयरूपांशे, 'तद्विलक्षणं' प्रत्यक्षविलक्षणं ज्ञानं परोक्षज्ञानं, प्रमेयांशगतज्ञानं परोक्षं, प्रमितिप्रमातृरूपांशे गतं प्रत्यक्षज्ञानं, एकं (ज्ञानत्वापेक्षयैकं) ज्ञानं वदन्-प्रतिपादयन् गुरुः, (प्रभाकरः) अनेकान्तं स्याद्वादं न प्रतिक्षिपेत्, न निराकुर्यादिति (१-पूर्वमीमांसकः) ॥४८॥

**भट्टो वा मुरारिरपि स्याद्वादे संमतिं ददाति—**

जातिव्यक्त्यात्मकं वस्तु, वदन्ननुभवोचितम् ।
भट्टो वाऽपि मुरारिर्वा, नाऽनेकान्तं प्रतिक्षिपेत् ॥४९॥

'जातिव्यक्त्यात्मकं'=जातिः सामान्यं च व्यक्ति विंशेषश्च, तावेवात्मा-स्वरूपं यस्य तत्-जातिव्यक्त्यात्मकं वस्तु, अर्थात् सामान्यविशेषोभयस्वरूपाऽवच्छिन्नं वस्तु, यथा वस्तुनःस्वरूपं सामान्यं तथा विशेषश्च, वस्तुनि तादात्म्यसम्बन्धेन सामान्यं यथा वर्त्तते तथा विशेषश्च 'तदभिन्ना-भिन्नस्य तदभिन्नतान्यायेन, सामान्याऽभिन्नो विशेषः, विशेषाऽभिन्नं सामान्यं, सामान्यविशेषोभयत्वाऽभिन्नं वस्त्वेवेत्यनुभवोचितं जातिव्यक्त्यात्मकं वस्तु, वदन् भट्टो (मीमांसकविशेषः) मुरारि र्वा, अनेकान्तं स्याद्वादं न प्रतिक्षिपेत्-तिरस्कुर्यादिति, मीमांसामांसलमतिर्मीमांसकोऽपि सर्वज्ञाऽपलापं प्रलपन् संशयज्ञानमेकमनेकाकारं प्रतिजानानो नानेकान्तं प्रतिक्षिपेत् ॥४९॥

ब्रह्मवेदान्तिनोऽनेकान्तेऽनुमतिः—

अबद्धं परमार्थेन, बद्धं च व्यवहारतः ।
ब्रुवाणो ब्रह्मवेदान्ती, नाऽनेकान्तं प्रतिक्षिपेत् ॥५०॥

परमार्थेन-वस्तुतः, अबद्धं-संसारबन्धनरहितमात्मानं, व्यवहारतः लोकानुकूलप्रवाहसम्बन्धव्यवहारापेक्षया, बद्धं-संसारबन्धनसहितमात्मानं ब्रुवाणो-वदन् ब्रह्मवेदान्ती अनेकान्तं स्याद्वादमतं न प्रतिक्षिपेत्-निराकुर्यादिति (ब्रह्मसाक्षात्कारानन्तरं हि घटादीनां बाधः यत्र त्वस्य सर्वमात्मैवाऽभूत् तत् केन कं पश्येत् (बृ.४-५-१५) इति श्रुतेः, न तु संसारदशायां बाधः, 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ.४ ५-१५) इति श्रुतेःव्यवहारदशायां संसारदशायां द्वैतमिव=द्वैतं भवतीव । प्रपञ्चोपादानभूतेन अज्ञानेन द्विचन्द्रादिदर्शनवत् क्रियाकारकफल-लक्षणकल्पितभेदादिव भवति, वास्तविकं द्वैतं न भवति तथा चाबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति न घटादिप्रमायामव्याप्तिः । तदुक्तम् देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात् ॥१॥ इति आत्मनिश्चयाद् ब्रह्मसाक्षात्कारपर्यन्तमित्यर्थः । लौकिकमिति घटादिज्ञानमित्यर्थः । वेदान्तपरिभाषायां निरुपाधिकपरब्रह्मसोपाधिककार्यब्रह्मभेदेन संसारदशापरमार्थदशाभेदः । अत्र 'द्वासुपर्णा सयुजासखया समानं वृक्षं परिष्वमजाते' (मु.३/१) एतद् श्रुतिमध्ये संसारीजीवः संसारकर्मफलानुभववान्, तथेश्वररूपब्रह्म, असंसार

॥ ४८ ॥

त्वसम्पन्नं प्रतिपाद्यते । तत्त्वमसि रूपमहावाक्यस्य तात्पर्गं चिन्तनीयम् । संसारबन्धनेन संसारिजीवब्रह्मबद्धं व्यवहारत-उपचारतः, ईश्वररूपं ब्रह्म असंसारित्वेन परमार्थतोऽबद्धमुच्यते ॥५०॥

सर्वदर्शनशास्त्रव्यापकं स्याद्वादं वेदा न निराकुर्युः—

ब्रुवाणा भिन्नभिन्नार्थान्, नयभेदव्यपेक्षया ।
प्रतिक्षिपेयुर्नो वेदाः, स्याद्वादं सार्वतान्त्रिकम् ॥५१॥

वेदाः-श्रुतयः, भिन्नभिन्ननयानामपेक्षया, भिन्न-भिन्नार्थान् ब्रुवाणा-वदन्तो वेदाः सर्वतन्त्रव्यापिनं-सार्वतान्त्रिकं स्याद्वादं न प्रतिक्षिपेयुर्निराकुर्युः—तथाहि परमात्मना महावीरेणेन्द्रभूतिनामा मधुरवाचा गौतमगोत्र एवोक्तः 'भो गौतमेन्द्रभूते ! वेदार्थं विभावयेति कथयित्वा वेदस्य निश्चयनयापेक्षया सम्यगर्थो विवेचितः, तमर्थं विदित्वा गौतमेन्द्रभूतिर्भगवतः शिष्यो जातः, एवं शेषा दशाऽपि विद्वांसो भिन्नभिन्ननयाऽपेक्षया वेदस्य समीचीनार्थं दर्शयित्वा प्रतिबोधितास्तेऽपि शिष्या जाता, गणधरपदवीभाजः संजाताः, जैनदर्शनेऽद्यापि गणधरवादः प्रतिष्ठितः प्रसिद्धश्चातः समीक्षणीयःसर्वैरिति विज्ञपयाम्यहम् ॥५१॥

अथ लोकायतिकानां व्यवहारदुर्नयावलम्बिनां सकलतान्त्रिकबाह्यानां किं सम्मत्याऽसम्मत्या वेति तेषामवगणनामेवाऽऽविष्कुर्वते—

विमतिः सम्मतिर्वाऽपि, चार्वाकस्य न मृग्यते ।
परलोकात्ममोक्षेषु, यस्य मुह्यति शेमुषी ॥५२॥

चार्वाकस्य=नास्तिकस्य, विमति-र्विरुद्धप्रतिपत्तिः, सम्मतिः सम्यक्प्रतिपत्तिर्वा, न मृग्यते-न विचार्यते, कुतः ? यस्य चार्वाकस्य शेमुषी बुद्धिः, 'परलोकात्ममोक्षेषु' परलोके जीवे मोक्षे च, मुह्यति-मूढा स्याद् यदाऽऽबालगोपालप्रसिद्धं जीवाद्यपि न जानाति, तस्य का विमतिः ? सम्मतिर्वेत्यर्थः, ततः एवमेव सिद्धं सर्वमतसम्मतमनेकान्तं । यत एव चानेकान्तात्मकं वस्तूपपत्तिक्षममिति । येषां परलोकात्ममोक्षेष्वेव मोहःतैःसह विचारान्तरविमतिसम्मती अपर्यालोचितमूलारोपणकप्रासादकल्पनसंकल्पकल्पे इति भावः ॥५२॥

तापशुद्धा-शुद्धशास्त्रयोर्निरूपणम्—

तेनाऽनेकान्त सूत्रं यद्, यद्वा सूत्रं नयात्मकम् ।
तदेव तापशुद्धं स्याद् न तु दुर्नय संज्ञितम् ॥५३॥

तेन-मार्हतन्त्रिकस्याद्वादसिद्धान्तहेतुना, प्रमाणरूपानेकान्तमयशास्त्ररूपसूत्रं (दिग्दर्शकत्वेन) यद् अथवा प्रमाणकारकनयमयशास्त्रसूत्रं यद्, तदेव शास्त्रपरीक्षकतापशुद्धिपरीक्षायामुत्तीर्णमेव, 'न तु दुर्नयसंज्ञितं' परन्तु नयाभाससंज्ञासमन्वितं शास्त्रं तापशुद्धं न, नयाभासरूपदुर्नयशास्त्रं=नैगमाभासरूपवैशेषिक-

नैयायिकयोः शास्त्रम् , संग्रहनयाभासावान्तरभूतपरसंग्रहाभासरूपसर्वाद्वैतदर्शनशास्त्रं, साङ्ख्यदर्शनशास्त्रं च, व्यवहारनयाभासरूपचार्वाकदर्शनशास्त्रम् , ऋजुसूत्रनयाभासरूपबौद्धदर्शनशास्त्रम्, शब्दनयाभासरूपशब्दब्रह्मवादिनः शास्त्रम् , समभिरूढनयाभास-एवंभूतनयाभास द्रव्यास्तिकनयाभास-पर्यायार्थिकनयाभास-अर्थनयाभास-शब्दनयाभास-अर्पितनयाभासअनर्पितनयाभास--व्यवहारनयाभास-निश्चयनयाभास--ज्ञाननयाभासक्रियानयाभासादय एते दुर्नयसंज्ञिताः, तत्प्रतिपादकशास्त्रं च तापशुद्धं नार्थात् दुर्नयमताभिनिविष्टबुद्धिभिस्तीर्थान्तरीयैस्तद्धर्मिगतधर्मान्तरनिराकरणाऽभिप्रायेणैव सावधारणं तत् प्रयुज्यते, यथा नित्यमेव वस्तु, अनित्यमेव वेत्यादि, तदा तादृशपदार्थाप्रसिद्धे र्निरालम्बनत्वादलीकतां प्राप्नुवत्केन वार्येत, तस्मान्नयप्रमाणाऽभिज्ञः स्याद्वादी सकलादेशविकलादेशावधिकृत्य यद् ब्रूते तत्तत्सत्यं, दुर्नयमतावलम्बिनो यद्यदाचक्षते तत्तदलीकमिति भावः ॥५३॥

नित्यैकान्तमतस्य निराकरणम्—

नित्यैकान्ते न हिंसादि, तत्पर्यायाऽपरिक्षयात् ।
मनःसंयोगनाशादौ, व्यापारानुपलम्भतः ॥५४॥

सांख्या एवं मन्यन्ते हि आत्मा नित्य एवे' ति नित्यैकान्ते-द्रव्यपर्यायोभयरूपेण सर्वथाऽऽत्मन एकान्तनित्यत्वे न हिंसादि तत्पर्यायाऽपरिक्षयात्'=सांख्यमते हिंसादि (आदिनाऽहिंसादि) न घटते यतः-

॥ ५१ ॥

तस्यात्मनः· मनुष्यादिपर्यायाणामपरिच्चयात्-अविनाशात्-नित्यत्वात् (अप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वं) नित्यत्वमिति अर्थात् मनुष्यादिशरीरगतप्राणानां नाशो हिंसोच्यते तदत्र न घटते, सांख्यः प्राह-'मनः संयोगनाशादौ'=आत्मनो नित्यत्वेऽपि विवक्षित-हिंसादि न घटते तथापि अस्मन्मते परिभाषितहिंसादि घटते तथाहि-लोके व्यक्तेर्मरणमुच्यते तदात्मव्यक्तेर्यश्चरमात्ममनःसंयोगोऽथवा चरमेन्द्रियमनःसंयोगोऽस्ति तस्य यो ध्वंसः मरणरूपहिंसा परिभाष्यते, जैनःप्राह-तन्न सम्यक्कथनं, यतो मनःसंयोगनाशस्यार्थसमाजतः (द्वितीयसामग्रीतः) सिद्धेः, मनःसंयोगनाशादौ च अन्यव्यक्तिरूपहिंसकस्य हिंसारूपव्यापारस्यानुपलम्भात् अनुपलब्धेरननुभवादिति नित्यैकान्तवादे हिंसा न घटते तदाऽहिंसादिधर्मःकथं घटेतेति ॥५४॥

सांख्यमते नित्यनिर्लेपात्मव्यवस्थायां का बुद्धिः—

बुद्धिलेपोऽपि को नित्य-निर्लेपात्मव्यवस्थितौ ।
सामानाधिकरण्येन, बन्धमोक्षौ हि सङ्गतौ ॥५५॥

सांख्यमते=पुरुषस्य च प्रकृतिविकृत्यनात्मकस्य अपरिणामिनित्यस्य चिद्रूपस्य पुष्करपलाशवन्निर्लेपस्यात्मनो न बन्धमोक्षौ, किन्तु प्रकृतेरेव, 'नानाश्रयायाः प्रकृतेरेव बन्धमोक्षौ न पुरुषस्ये' ति तदप्यसारम्, अनादिभवपरम्परानुबद्धया प्रकृत्या सह यः पुरुषस्य विवेकाऽग्रहणलक्षणोऽविष्वग्भावः स चेन्न

बन्धः, तदा को नामाऽन्यो बन्धः स्यात्, प्रकृतिः सर्वोत्पत्तिमतां निमित्तममिति च प्रतिपद्यमानेनाऽयुष्मता संज्ञान्तरेण कर्मैव प्रतिपन्नम् । तस्यैवंरूपत्वादचेतनत्वाच्च ततः पुरुषस्यैव बन्धमोक्षौ, संसारश्च स्वीकरणीय एव मिथ्यादर्शनाविरतिप्रमादकषाययोगेभ्योऽभिन्नस्वरूपत्वेन कर्मबन्धहेतुभ्यो बन्धसिद्धौ च सिद्धस्तस्यैव निर्बाधः संसारः, बन्धमोक्षयोश्चैकाधिकरणत्वाद् य एव बद्धः स एव मुच्यते इति पुरुषस्यैव मोक्ष आबाल-गोपालं तथाप्रतीतेः इत्यादि विवेचनतः सिद्ध एव, नित्यस्य निर्लेपस्य आत्मनो व्यवस्थितौ-व्यवस्थायां, कापिलानां को बुद्धिलेपः ? अर्थात् न कोऽपि बुद्धिलेपो यतो हि 'सामानाधिकरण्येन बन्धमोक्षौ संगतौ' य आत्मा बद्धः स एव मुच्यते इत्यपेक्षया एकात्मरूपाधिकरणाऽवच्छेदेन एकाधिकरणवृत्तित्वेन-भिन्नाधिकरणाऽवृत्तित्वेन सामानाधिकरण्यं बन्धे च मोक्षे च वर्त्तते, कदाचिदपि स्वात्मानं विमुच्य देशकालाऽनवच्छेदेन बन्धश्च मोक्षश्च न भूतौ भवतो भविष्यतश्चार्थात् कालत्रयाऽवच्छेदेन एकात्मन्येव बन्धमोक्षाविति ।

आत्मनो नित्यैकान्तवादे नित्यनिर्लेपवादे कथं बुद्धिलेपः ?—सांख्यमते नित्यनिर्लेपत्वावच्छिन्नात्मनो व्यवस्थायां-निर्णये जडस्वरूपबुद्धिलेपः-प्रकृतिसम्बन्धःकः ? बुद्धिलेपवानात्मेति कल्पने नित्यनिर्लेपवानात्मेति व्यवस्थाया भङ्गःस्यात् बन्धमोक्षतत्त्वसिद्धौ यदि बुद्धिलेपकल्पना तदा (बुद्धेरेव) प्रकृतेरेव बन्धमोक्षौ प्रकृतिविकृत्यनात्मकस्य पुरुषस्य न बन्धमोक्षौ, यतः सामानाधिकरण्येन, बन्धमोक्षौ सङ्गतौ, तस्मात्प्रकृति (जड-बुद्धिः) रूपाधिकरणे बन्धमोक्षौ समागतौ जडरूपपरबुद्धौ कथं बन्धमोक्षौ ? तत्तु सर्वथा-

ऽनिष्टमेव, यश्चेतनो बध्यते स मुच्यते इति, वचनात् अतः सांख्यमते आत्मनि-पुरुषे बन्धमोक्षसंसारमुक्तिरूपतत्त्वस्य सर्वथाऽभावप्रसङ्गः स्यात् अतः नित्यनिर्लेपैकान्तवादे आत्मा, संसारी वा सिद्ध इति आत्मव्यवस्थाया भङ्गोऽतः सांख्यमते सिद्धितदुपायरहितत्वे कथं मुमुक्षुणा ज्ञानिना तन्मतं ग्राह्यमेवेति ? ॥५५॥

अनित्यैकान्तपक्षे हिंसादिकमयुक्तम्—

अनित्यैकान्तपक्षेऽपि, हिंसादिकमसङ्गतम् ।
स्वतो विनाशशीलानां, क्षणानां नाशकोऽस्ति कः ? ॥५६॥

बौद्धमते-आत्मन एकान्ताऽनित्यत्वे, हिंसादिकं(हिंसा आदौ यस्मिन्स्तत् कृत्याकृत्यादि सर्वं)असङ्गतम्-सङ्गतिरूपयुक्तिहीनमर्थादसम्भवाघ्रातमिति कथमसंगतिरिति चेत् नाशहेतोरयोगेन क्षणिकत्वं साध्यते घटादिपदार्थनाशकत्वासंभवतः सर्वे भावाः स्वभावत उत्पद्यन्ते सद्यो विपद्यन्ते च एवं प्रतिक्षणं नाशोत्पादविषयकधारा प्रचलति अत एव कथ्यते 'स्वतो विनाशशीलानां क्षणानां नाशकोऽस्तु कः' ? क्षणानां-पदार्थानां स्वत एव स्वयमेव विनाशप्रकृतिकानां को नाशहेतुरन्योऽस्तु ? स्वयमेव स्वमुत्पादयति क्षणानन्तरं नाशयति चेति ॥५६॥

क्षणानामनन्तरत्वं हिंसाहेतुः कथं न ?—

आनन्तर्यं क्षणानां तु, न हिंसादिनियामकम् ।
विशेषाऽदर्शनात्तस्य, बुद्धलुब्धकयोर्मिथः ॥५७॥

अत्र बौद्धः=सूकरस्यान्त्यक्षणो नरादिक्षणहेतुर्भवतु ! ततस्तत्राऽपि हिंसकत्वापतने स्वः स्वस्य-हिंसको भवेत्, अर्थात् नरादिक्षणहेतु लुब्धकोऽपि हिंसकत्वेन सिद्ध इति चेत् तदा भवदीये भगवति बुद्धेऽपि सूकरहिंसकत्वापत्तिर्भविष्यति, यतः सूकरस्य विजातीयधारारूपनरादिक्षणोत्पादे यथा तत्क्षणपूर्वं लुब्धकोऽस्ति ततः स हेतुर्जातः, तथा तत्क्षणपूर्वं भगवान् बुद्धोऽप्यस्त्येव, द्वयो र्न कश्चिद्विशेषः। एवं बुद्धोऽपि सूकरहिंसको भविष्यति. एतत्तु भवतामनिष्टमेवेति विवेचनत एतत्सिद्धमेव 'क्षणानां'-पदार्थानामानन्तर्यं-अनंतरत्वं तु न हिंसादि-नियामकम्-न हिंसादि कार्यं प्रति हेतु र्यतस्तस्य-आनन्तर्यस्य-(अनन्तरत्वे) मिथस्तत्क्षणपूर्ववर्तिबुद्धलुब्धकयो र्विशेषस्य दर्शनाभावादिति ॥५७॥

**हिंसादिनियामकः संक्लेशनामको विशेषोऽस्त्येव कथं न ?**

सङ्क्लेशेन विशेषश्चे-दानन्तर्यमपार्थकम् ।
न हि तेनाऽपि सङ्क्लिष्ट-मध्ये भेदो विधीयते ॥५८॥

बौद्धः प्राह-अत्रानन्तरत्वे बुद्धलुब्धकयोर्मध्ये समानत्वेऽपि दुष्टाशयरूपसंक्लेशद्वारा विशेषो वर्त्तते, लुब्धके संक्लेशो वर्त्तते न बुद्धेऽतोऽनन्तरत्वसंक्लेशोभयविशिष्टो लुब्धक एव हिंसको न बुद्ध इति चेत् तदा 'क्षणानामानन्तर्यं हिंसादिनियामकम्' इति सिद्धान्तो निरर्थकोऽर्थहीन एव, हि-यतः, 'तेनापि'

॥ ५५ ॥

तेनाऽनन्तर्येणाऽपि, संक्लिष्टानां दुष्टाशयवतां मध्ये न भेदो-विशेषो विधीयते-क्रियते अर्थात् संक्लिष्टानां मध्ये आनन्तर्यं न विशेषविधायकमतः क्षणानां-निर्विशेषविधायक-हिंसादिनियामकमानन्तर्यमन्यथासिद्धत्वेन निरर्थकमिति

(अवश्यक्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धं, दण्डादिभिरवश्यक्लृप्तप्रतिनियतपूर्ववर्तिभिरेव घटादिकार्यसम्भवे रासभादिकमन्यथासिद्धम् ) ॥५८॥

॥ ५९ ॥ भेदकानन्तर्येण समग्रा क्रियाभिदा भिद्यते-

मनोवाक्काययोगानां, भेदादेवं क्रियाभिदा ।

समग्रैव विशीर्येतेत्येतदन्यत्र चर्चितम् ॥५९॥

एवं सर्वत्र क्षणानां भेदकारकानन्तर्यद्वारा, मनोयोगभेदात्मा-मानसिकक्रियाभेदः, वचोयोगभेदजन्यवाचिक-क्रियाभेदः, काययोगभेदप्रयुक्तकायिकक्रियाभेद इत्यादिसमस्तक्रियाभेदानां विनाशः-विशरणं स्यादित्येतद्वस्तु, अन्यत्र-एतद्ग्रन्थ-भिन्नग्रन्थेषु चर्चाविषयीकृतमेव तत्र निरीक्षणीयमित्यतिदेशः ॥५९॥

अनेकान्तशास्त्रं सर्वान्यशास्त्राद्विशिष्यते—

नित्याऽनित्याद्यनेकान्त-शास्त्रं तस्माद्विशिष्यते ।
तद्दृष्ट्यैव हि माध्यस्थं, गरिष्ठमुपपद्यते ॥६०॥

'नित्याऽनित्याद्यनेकान्तशास्त्रं'=भिन्नभिन्नापेक्षारूपदृष्टिकोणतो नित्यत्वाऽनित्यत्वसत्त्वासत्त्वसामान्यविशेषाद्यनन्तधर्मावच्छिन्नवस्तुप्रतिपादकानेकान्तरूपं शास्त्रं (शासनरक्षणगुणसामर्थ्ययाथार्थ्यविशिष्टं) 'तस्मात्'=नित्यानित्याद्येकान्त - द्रव्यपर्यायात्मकवस्तुप्रतिपादनपरायणसर्वनयाभासादिरूपदुर्नयप्रतिपादितशास्त्रतः, 'विशिष्यते' समन्वयसिद्धिपारस्परिकं दृष्टिकोणं समीक्ष्य समाधानदृष्टिसर्वधर्ममिलनतः, एकान्ताग्रहनिग्रहविरामतःपरमशान्तिप्रभावानुभवतः परमात्मतत्त्वानुसन्धानद्वाराऽतिशेते, जयतीति यावत् , अत एव कथ्यते 'तद्दृष्ट्यैव हि माध्यस्थ्यं गरिष्ठमुपपद्यते'=अनेकान्तशास्त्राभ्यासजन्यानेकान्तसर्वसापेक्षदृष्टिरूपसम्यग्दर्शनप्रधानत्वेन माध्यस्थ्यं-रागद्वेषपरिणत्यभावः, मध्यस्थन्यायसम्पन्नदृष्टिपूर्वकस्थितिः-परमसमता-सर्वधर्मसहिष्णुतापूर्वकसर्वधर्मवद्भ्यः संपूर्णनीडरतान्यायपूर्वकं परम-सत्योद्घोषणं 'उपपद्यते'—उपपन्नं सर्वथा भवतीति ॥६०॥

सर्वनयेषु स्वपुत्रतुल्याऽन्यूनाधिकबुद्धिर्भवति—

यस्य सर्वत्र समता, नयेषु तनयेष्विव ।
तस्यानेकान्तवादस्य, क्व न्यूनाधिकशेमुषी ? ॥६१॥

'यस्य'=स्याद्वादरूपानेकान्तवादस्य पितृतुल्यस्य, 'सर्वत्र नयेषु तनयेषु इव समता' समस्तेषु नयेषु-स्वांश-वस्त्वंशरूपेषु तनयेषु-औरस-स्वकीयपुत्रेषु यथा समता-निर्विशेषमनस्कता-भेदभावशून्यता वर्त्तते, 'तस्यानेकान्तवादस्य'=जनक-समानस्य तस्य स्याद्वादरूपवादस्य (स्याद्वादवादिनो वा) 'क्व न्यूनाधिकशेमुषी'—न च कुत्रचिन्नये बुद्धे न्यूनताऽधिकता च अपितु समानबुद्धिकता विद्यते, बुद्धेर्मनसो वा सर्वत्र तुल्यता वर्ततेऽत एव लोकोत्तरसमता, तत्रापेक्षाभेदतः सर्वे नयाः स्वस्वस्थाने स्वस्वधर्मसत्तासाम्राज्यमनुभवन्तः परमधर्मसत्तां प्रति तिरस्कारबुद्धेरत्यन्ताभावात्—मैत्रीसद्भावात्, सर्वनयेषु च समकक्षतया मतिं विदधत् साम्यभावो विजयते सदा स्याद्वादिनाम् ॥६१॥

स्याद्वादस्य नयाः स्ववस्त्वंशाः स्वतन्त्रा एव—

स्वतन्त्रास्तु नयास्तस्य, नांशाः किन्तु प्रकल्पिताः ।
रागद्वेषौ कथं तस्य, दूषणेऽपि च भूषणे ? ॥६२॥

'तस्य'=अनेकान्तवादस्य-सर्वनयात्मकस्याद्वादस्य 'अंशा नयास्तु स्वतन्त्राः'=देशरूपा अंशविशेषा नयास्तु स्वतन्त्राः–स्वार्थसत्याः सन्तः स्वरूपस्याद्वादस्य तंत्राः-अधीना एव (स्वाभिमतधर्मस्थापनकर्तृत्वरूपस्वातंत्र्यसंपन्नाः) नान्याधीनाः परन्तु प्रकल्पिता-प्रकर्षेण छाद्मस्थ्यस्वाच्छन्द्यसंस्पृष्टमतिकल्पनाशिल्पकल्पिता न'नयानशेषानविशेषमिच्छन्; न पक्षपाती समयस्तथा ते' मत्सरित्वाभावपूर्वकपक्षपातित्वाभावात् हे भगवन्, ते तव समय'-सिद्धान्त आगम इति अतः नयानशेषानविशेषमिच्छन् ,सर्वनयात्मकत्वादनेकान्तवादस्य। यथा विशकलितानां मुक्तामणीनामेकसूत्राऽनुस्यूतानां हारव्यपदेशः, एवं पृथगभिसन्धीनां नयानां स्याद्वादलक्षणैकसूत्रप्रोतानां श्रुताख्यप्रमाणव्यपदेशः, एवं च सर्वनयात्मकत्वे भगवन्समयस्य सर्वदर्शनमयत्वं न विरुद्धमेव, नयरूपत्वाद्दर्शनानाम् एवं च तस्य-सर्वनयात्मकस्याद्वादस्य, स्याद्वादिनो वा 'दूषणेऽपि च भूषणे कथं रागद्वेषौ' केनचित् प्रत्यनीकेनैकान्तवादिना निन्दावहेलनातिरस्कारादिरूपदूषणदानेऽथवा स्याद्वादानुकूलेन मित्रेण तत्त्वान्वेषिणा-सत्यग्राहिणा सत्-सर्वश्रेष्ठसिद्धान्तादिसद्विशेषणादिना भूषणरूपकथने, निन्दकस्तावकोभयोपरिष्टान्न रागद्वेषावर्थाद् दृष्टिरागद्वेषत्यागरूपसमतासुधाऽप्रतिहता वर्त्तते। (स्वार्थसत्यसर्वनयविषयकमाध्यस्थ्यमावेदितमत्र) ॥६२॥

॥ ५९ ॥

महेन्द्रजालवद् दुर्नयार्थे माध्यस्थ्यं सताम् —

अर्थे महेन्द्रजालस्य, दूषितेऽपि च भूषिते ।
यथा जनानां माध्यस्थ्यं, दुर्नयाऽर्थे तथा मुनेः ॥६३॥

यथा 'महेन्द्रजालस्यार्थे'=महद् यद् इन्द्रजालं तस्य=महेन्द्रजालस्य मन्त्र-द्रव्यहस्तप्रयोगादिनाऽसंभवद्वस्तुप्रदर्शनस्य रूपपरावर्तनादिकमायारूपस्य 'अर्थे'=असति वाऽसत्यरूपे विषये, केनचिद् 'दूषिते' निन्दादिदोषविषयीकृते अपि च 'भूषिते' स्तुत्यादिरूपभूषणविषयीकृते 'जनानां'-प्रेक्षकजनानां 'माध्यस्थ्यं'-उभयविषये समानताऽस्ति, तथा-तेन प्रकारेण 'दुर्नयाऽर्थे' नित्यानित्याद्येकान्तवादाश्रितनयाभासमताऽभिमते केनचिद् दूषितेऽपि च भूषिते वस्तुतोऽसति वाऽसत्ये पदार्थे, मुनेः-स्याद्वादसत्यरूपतत्त्वं मन्यते इति मुनिः तस्य मुनेः, माध्यस्थ्यं-ताटस्थ्यं, भवस्थिति-चिन्तनद्वारा करुणागर्भितं साम्यं-प्रसादाप्रसादाभावरूपं वर्तत एव । (दुर्नयविषयकमाध्यस्थ्यमत्र.) ॥६३॥

अज्ञानान्ध एव स्याद्वादं दूषयेन्न तु पण्डितः—

दूषयेदज्ञ एवोच्चैः, स्याद्वादं न तु पण्डितः ।
अज्ञप्रलापे सुज्ञानां, न द्वेषः करुणैव तु ॥६४॥

मात्सर्यप्रयुक्तपक्षपातजनकस्याद्वादविषयकाज्ञानरूपान्धतायुतोऽज्ञ एवोच्चैः—महता प्रकारेण स्याद्वादं दूषयेत्' सर्वदर्शनव्यापकं स्याद्वादं-अनेकान्तसिद्धान्तं, दोषोद्भावनद्वारा कलङ्कितं कुर्यात्, परन्तु 'पण्डितस्तु न दूषयेत्, स्याद्वादशास्त्राभ्यासमननद्वारा तत्त्वानुगबुद्धिरूपपण्डासमन्वितः पण्डितस्तु न दूषयेत्—दूषणान्वितं न कुर्यादपि तु भूषणाऽन्वितं कुर्यात्, 'अज्ञप्रलापे सुज्ञानां न द्वेषः करुणैव तु'=अज्ञानां सम्यग्ज्ञानरहितानां प्रलापे-अनर्थकवचसि, सुज्ञानां-सम्यग्ज्ञानप्रकाशशालिनां, 'न द्वेषः' न क्रोधाद्यावेशः अपितु करुणैव परदुःखप्रहाणेच्छारूपा, दयैव-परानुग्रहरूपा वा करुणा ज्ञेया ॥६४॥

ज्ञानं विभजते—

त्रिविधं ज्ञानमाख्यातं, श्रुतं चिन्ता च भावना ।
आद्यं कोष्ठगबीजाभं, वाक्यार्थविषयं मतम् ॥६५॥

तिस्रो विधाः प्रकारा यस्मिंस्तत्, त्रिविधं ज्ञानं-त्रिप्रकारकं ज्ञानं, एकं श्रुतज्ञानं, द्वितीयं चिन्ताज्ञानं च तृतीयं भावनाज्ञानं (ज्ञानत्वेन विषयतृष्णाऽपरिहारित्वेन विधियत्नवत्त्वेन जलादित्वेन साम्यमत-उदकदुग्धामृतकल्पं यथार्हं ज्ञेयम्) आद्यं ज्ञानं विवृत्यते='आद्यं कोष्ठगबीजाभं'=कोष्ठे अन्नकोष्ठके-कोष्ठागारे गतं यद् धान्यबीजं तत्सदृशं आद्यं ज्ञानं, श्रुतज्ञानमर्थाच्चिन्ताज्ञानं प्रति गुरुभक्त्यादिविधानात् बीजं-कारणमन्यथा चिन्ताभावनाज्ञानानुपपत्तिः, यः शास्त्ररूपसिद्धान्तं शृण्वन् संवेगं गच्छति तस्य श्रुतज्ञानं

॥ ६१ ॥

अतो मिथ्याऽभिनिवेशरहितं मतं नान्यस्य, किञ्च युक्तिगम्यतर्करूपोहासत्पक्षनिराकरणरूपापोहादिरहितं श्रुतज्ञानं, तथा 'वाक्यार्थविषयं' सर्वशास्त्राऽविरोधि, गीतार्थस्य पदसमुदायात्मकवाक्यार्थ—नयात्मकशाब्दबोधमात्रविषयकं श्रुतमयं ज्ञानं, (स्वार्थप्रत्यायने शक्तिमान् वाक्यान्तरघटितपदापेक्षणरहितः परस्परसहकारिपदसमूहो वाक्यम् ) (भिन्नभिन्नानुपूर्वीविशिष्टा वर्णा विशिष्टपरिणामवन्तः शब्दाः, ते च पदवाक्यादिरूपतया व्यवस्थिताः,) ॥६५॥

—द्वितीयचिन्तामयज्ञानस्य विवरणम्—

महावाक्यार्थजं यत्तु, सूक्ष्म-युक्ति-शताऽन्वितम् ।
तद् द्वितीयं जले तैल—बिन्दुरीत्या प्रसृत्वरम् ॥६६॥

'यत्तु' द्वितीयं चिन्तामयं ज्ञानं, ऊहापोहादिसहितं 'महावाक्यार्थजं' अनन्तधर्माऽऽत्मकवस्तुप्रतिपादकानेकान्तविषयरूपमहावाक्यार्थशाब्दबोधजन्यं, 'सूक्ष्मयुक्तिशताऽन्वितं'=अतिसूक्ष्मबुद्धिशालिगम्यसुयुक्तिशतेनालोचनायुक्तं, जले तैलबिन्दुवद् विस्तारि-व्यापकतास्वभावं सर्वपदार्थविधायकसर्वशास्त्रे चिन्तामयं ज्ञानमिति ॥६६॥

तृतीयभावनामयज्ञानस्य विवरणम्—

ऐदम्पर्यगतं यच्च, विध्यादौ यत्नवच्च यत् ।
तृतीयं तदशुद्धोच्च–जात्यरत्नविभानिभम् ॥६७॥

'यच्च' किञ्च यत्तृतीयं भावनामयं ज्ञानं 'ऐदम्पर्यगतं'=ऊहापोहरहितवाक्यार्थोहापोहसहितमहावक्यार्थरूपार्थ-विज्ञानजन्यपरमार्थरूपतत्त्वविषयकज्ञानाऽभिन्ने ऐदम्पर्ये–तात्पर्ये गतं स्थितं परिणतं वर्त्तते 'विध्यादौ यत्नवच्च यत्' यद् भावनामयं ज्ञानं विधि-द्रव्य-दातृ-पात्रादिषु यत्न-महादरपूर्वकप्रयत्नशालि, 'तदशुद्धोच्चजात्यरत्नविभानिभं' शुद्धोच्चजात्यरत्नं निसर्गत एवाऽन्यरत्नेभ्योऽधिकं प्रकाशते तथापीदं भावनामयं ज्ञानमप्यशुद्धोच्चजात्यरत्नसमानो विशिष्टभव्यजीवस्तस्य कर्ममलेन मलिनत्वेऽपि द्वितीयज्ञानादधिकं भावनाज्ञानं प्रकाशते, भावनाज्ञानस्य महत्त्वं कथ्यते तथाहि भावनास्थैर्यप्रयुक्तकुशलस्थैर्यतो मोक्षस्य प्रधानकारणतो निरुपाधिकजीवपरिणामरूपभावनायां सर्वोचितानुष्ठाने प्रधानत्वं ज्ञायते; भावनाऽनुगतं ज्ञानं तात्त्विकं प्रातिभं ज्ञानं, श्रुतमयज्ञाने ज्ञातमज्ञातदृष्टमज्ञातं, भावनाज्ञानेन दृष्टज्ञातं ज्ञातमेवेति, यतः श्रुतज्ञानमुपरागमात्रं–उपरितो-बाह्यतो ज्ञानं नाऽन्तरतः, अतः श्रुतमयज्ञानेनापायरूपानर्थेभ्यो निवृत्तिर्न भवति, हिताहितप्रवृत्तिनिवृत्त्यो मूलं भावनाज्ञानं । भावनाज्ञानिनो हि दृष्टापाययोगेऽप्यदृष्टापायेभ्यो निवर्त्तमाना दृश्यन्ते एवान्यजीवरक्षादौ प्रवर्त्तमानाः । अतो मुमुक्षुणा सर्वत्र भावनायां भावनाज्ञाने च प्रयत्नः कार्य इति ॥६७॥

प्रथमे ज्ञाने स्वल्पदर्शनविषयकग्रहः—

आद्ये ज्ञाने मनाक्पुंस—स्तद्रागाद्दर्शनग्रहः ।
द्वितीये न भवत्येष, चिन्तायोगात्कदाचन ॥६८॥

श्रुतज्ञानमये प्रथमे ज्ञाने, पुरुषस्य श्रुतशास्त्रसिद्धान्तविषयकरागस्य कारणात् 'मनाग् दर्शनग्रहः' स्वल्पकोटिको दर्शनस्वधर्मविषयको ग्रहः-विशिष्टाग्रहरूपपक्षपातो वर्त्तते, 'द्वितीये'चिन्तामये द्वितीये ज्ञाने 'एष' स्वल्पकोटिकोऽपि दर्शनग्रहः स्वल्पोऽपि दृष्टिरागरूपदर्शनग्रहः'चिन्तायोगात्'-ऊहापोहादिरूपविशिष्ट-चिन्तनरूपचिन्तायाः सम्बन्धतः; कदाचन-कस्मिंश्चिदपि काले, न भवति-असम्भवकोटिमारोहति, अर्थाद् चिन्ताज्ञाने स्वल्पदर्शनग्रहासंभवः, सतामपि दुरुच्छेदरूपस्वल्पदृष्टिरागाभावस्तत्र चिन्ताज्ञानस्याचिन्त्यप्र-भावः, ततः सम्यग् दृष्टेः प्रादुर्भावः ॥६८॥

अन्तिमे भावनाज्ञाने सर्वत्रैव हिता वृत्तिः—

चारिसञ्जीविनी—चार-कारकज्ञाततोऽन्तिमे ।
सर्वत्रैव हिता वृत्तिः, गाम्भीर्या-त्तत्त्वदर्शिनः ॥६९॥

भावनाज्ञानं हितकरणफलकं भवत तत्राऽन्तिमे-चरमे भावनाज्ञाने 'चारिसञ्जीविनीचारकारकज्ञा-
ततो' (वनस्पतिसमूहगतचारिरूप) सञ्जीविनीचारभक्षणकारकस्त्रीदृष्टान्ततः, तत्त्वदर्शिनः-तात्पर्यपर्यन्त-
दर्शनशालिनः महापुरुषस्य गम्भीरतापूर्वकं सर्वत्र-सर्वदर्शनगतमताभिमतनयशालिसर्वजने, हिता-हितका-
रिणी वृत्तिः-मानसादिद्वारा वर्त्तनं भवतीति चारिसञ्जीविनी-चारकारकदृष्टांतो लिख्यते=स्वस्तिमतीनगर्यां
द्वे विप्रकन्ये वसतः, द्वयो र्मिथो मैत्री गाढाऽऽसीत् , द्वयो र्विवाहःसञ्जातः, भिन्नभिन्ननगरे श्वसुरालयं
जग्मतुः, एकदा ते द्वे सख्यौ मिलिते, अकस्मात्ततो मिथः सुखदुःखभृतां वार्त्तां चक्रतुः, एका प्राह-अती
वाऽहं दुःखिताऽस्मि, मदीयः पतिर्मदधीनो नास्ति, द्वितीया प्राह-त्वं चिन्तां माऽकार्षीः,त्वामहं मूलौषधीं
ददामि, त्वं त्वत्पतिं तां भोजयेः, त्वदधीनस्त्वत्—पतिर्भविष्यति, तथा सा मूलौषधी स्वसख्यै दत्ता, दत्त्वा
सा स्वस्थाने जगाम,साऽपि स्वपतिं मूलौषधीं भोजयति स्म, तदनन्तरं स्वपति वृ षभीभूतः, पश्चात्सा
पश्चात्तापसन्तापवती जज्ञे, प्रतिदिनं वृषभीभूतं स्वपतिं गृहीत्वा वने तृणादिकं चारयामास, एवं स्वपतिं-
सिषेवे । एकदा स्त्री स्वपतिं वटवृक्षस्याऽधस्ताच्चारयति स्म, तद्वृक्षस्योपरिष्टादेकं विद्याधरदम्पतीरूपं
युगलमुपविष्टमासीत्, विद्याधरो वृषभं निरीक्ष्य स्वस्त्रीं कथितवान् , यद् एष वृषभो न प्रकृततः परन्तु-
मूलौषधीभोजनद्वारा पुरुषाकृतिं त्यक्त्वा वृषभाकृतिर्जातः । विद्याधर्योक्तं च स एष किं पुरुषो भावी न
वा ? एषा स्त्री कीदृशी दीना दुःखिनी च दृश्यते ? तदा विद्याधरेणोक्तं वृषभोऽपि पुनःपुरुषो भवति,

परन्तु तत्रोपायः कार्योऽस्ति तद् श्रूयतां तावत् , यद्येनं सञ्जीविनीनामकमूलौषधीरूपवनस्पतिं भोजयेत्तदा पुरुषो भवेन्नाऽन्यथा; सा सञ्जीविनीनामकौषधी चाऽस्य न्यग्रोधवृक्षस्याऽधस्ताद् वर्त्तते, वटस्याधउपविष्टा सा स्त्री विद्याधरदम्पत्यो वार्त्तां निशम्यावधार्य च भृशं प्रमुदिता, परन्तु तां सञ्जीविनीं न प्रत्यभिजानामि, हरिततृणादिकमत्र बहुप्रमाणमस्ति किं करोम्यहमिति विचारावर्त्ते पतिता, प्रान्ते निश्चितं तया 'वटाधःस्थं सर्वं तृणवनस्पत्यादिकं भोजनीयं मया' ततः सर्वंतृणादिकं भोजयति, तत्तृणाद्यन्तः पातिनी सञ्जीविन्यपि भोजिता, तत्क्षणात्तत्पति वृषभाकारं परित्यज्य पुनः सत्यः पुरुषो जातः, साऽनन्दास्वादसम्पन्ना जाता, यद्येवमात्मनि माध्यस्थ्यनामकाध्यात्मिकसञ्जीविनी भोजिता स्यात्तदा परभावगामिनी परिणतिः पशुप्रकृतिर्दूरीभवेच्च स्वरूपज्ञानकुशलो भेदज्ञानी महात्मा पुरुषो भवेत् , माध्यस्थ्यं हि सर्वत्र महाहितं करोतीति ॥६९॥

स्याद्वादालम्बनेन सर्वदर्शनसमानतां पश्यति यः स शास्त्रज्ञः—

तेन स्याद्वादमालम्ब्य, सर्वदर्शनतुल्यताम् ।
मोक्षोद्देशाऽविशेषेण, यः पश्यति स शास्त्रवित् ॥७०॥

'तेन' सगाम्भीर्यमाध्यस्थ्येनाथवा सर्वत्रहितकरणफलकभावनाज्ञानसम्पन्नेन हेतुना, 'स्याद्वादमालम्ब्य'=अनेकान्तवादरूपजैनप्रवचनमालम्बनं कृत्वा, मोक्षविषयको य उद्देशः सदाशयः-गन्तव्यस्थानरूपो-

त्कृष्टदेशोध्येयो यावत् तेन मोक्षोद्देशेन सहाविशेषेण—अभेदेन, अभेदं कृत्वा, यः 'सर्वदर्शनतुल्यतां' सर्वनय-विशेषरूपसर्वदर्शनसमानतां पश्यति–निरीक्षते स 'शास्त्रवित्'-शास्त्रज्ञानविशारद उच्यते इति ॥७०॥

**माध्यस्थ्यमेव शास्त्रार्थरूपधर्मवादः—**

माध्यस्थ्यमेव शास्त्रार्थो, येन तच्चारु सिध्यति ।
स एव धर्मवादः स्यादन्यद् बालिश-वल्गनम् ॥७१॥

शास्त्रविषयकतात्पर्यार्थस्तु माध्यस्थमेव' समतैव-सर्वहितकरणप्रधाना समतैव 'येन तच्चारु सिध्यति' येन शास्त्रार्थेन स्याद्वादालम्बनपूर्वकसर्वदर्शनतुल्यतादर्शनं तन्माध्यस्थ्यं मनोहरं सिद्धयति-सिद्धं भवति 'स एव धर्मवादःस्यात्' स माध्यस्थ्यरूपापूर्वशास्त्रार्थ एव धर्मवादः नान्यो वादः; अर्थात् सर्वनयाभिज्ञानां धर्मवादतो विपुलं श्रेयः, एकान्तवादिनां मिथ्यादृष्टीनां तु शुष्कवादविवादाच्च नियतमश्रेयो भवति, विजिगीषावर्जं परोपरि स्वमतसंस्थापनबुद्धिवर्जं जिज्ञासापूर्वकमागतस्य जिज्ञासोस्तत्त्वज्ञानद्वारा जिज्ञासापूर्त्तिरेव धर्मवादः श्रेयान् ॥

तथाहि-"श्रीमज्जिनभट्टसूरिवर्येण जिज्ञासयाऽऽगतेन श्रीहरिभद्रपुरोहितेन सार्धं धर्मवादः कृतः, तेन धर्मवादरूपशास्त्रार्थेन स पुरोहितहरिभद्रः, श्रीहरिभद्रसूरीश्वरोऽजायत, श्रीजिनशासनस्य एकदिग्गज-

॥ ६७ ॥

पण्डितस्य महत आचार्यवर्यस्य प्राप्ति र्जज्ञे, परन्तु बौद्धैः सह यदा सकारणं हरिभद्रसूरि विंवादसमराङ्गणे उत्तीर्णस्तदा माता, याकिनीमहत्तरा प्रवर्त्तिनीप्रमुखा, गुरु पार्श्वे समाजगाम, तद्वार्ता ज्ञात्वा तत्क्षणाद् गुरुदेवस्तत्रागत्य हरिभद्रसूरिं विवादतो न्यवारयदिति।"

अत एव कथ्यते 'अन्यद् बालिशवल्गनम्' धर्मवादाद् भिन्न-मन्यत् सर्वं बालिशानां मूर्खाणां मौख्यपूर्वकं वल्गनं-परस्परं कलहादिकरणमिति ॥७१॥

अध्यात्मवर्जितं शास्त्रमपि संसारः—

पुत्रदारादि-संसारः, धनिनां मूढ-चेतसाम्।
पण्डितानां तु संसारः, शास्त्रमध्यात्मवर्जितम् ॥७२॥

यथा मोहेन मूढं चेतो येषां तेषां धनिनां-धनवतां समृद्धिशालिनां पुत्रश्च दाराश्च पुत्रदारा आदौ यस्य तत् पुत्रदारादिकं वस्तु, संसारो जन्मजरामरणाद्युपाधिरूपसंसारवृद्धिहेतुत्वात्संसारः कथ्यते तथा पण्डितानां—पाण्डित्यदर्पान्वितानां, 'अध्यात्मवर्जितम्' आत्महितकारिज्ञानक्रियादिरूपाध्यात्मतत्त्वशून्यं शास्त्रं—शासनत्राणरहितं वाङ्मयं शास्त्रं संसारः-जन्मादिभवपरम्पराहेतुत्वात्संसार उच्यते; यद्यध्यात्मपरिपूतं शास्त्रं, स्वशक्तिसमन्वितं सत्, संसारतो मुक्तये भवतीति ॥७२॥

समतासहितमेकपदज्ञानं प्रमाणम्—

माध्यस्थ्यसहितं ह्येकपदज्ञानमपि प्रमा ।
शास्त्रकोटि वृ[१]थैवाऽन्या, तथा चोक्तं महात्मना ॥७३॥
वादांश्च प्रतिवादांश्च, वदन्तोऽनिश्चितांस्तथा ।
तत्त्वान्तं नैव गच्छन्ति, तिलपीलकवद्गतौ ॥७४॥

'माध्यस्थ्यसहितं ह्येकपदज्ञानं' समतासहितं—एकपदज्ञानं-एकपदविषयकं स्वभावलाभस्य संस्कार—भावना—वासनाकारणभूतं ज्ञानं प्रमाणात्मकं सम्यग्ज्ञानं भवति यथा माषतुषमुनये गुरुणा माध्यस्थ्यसाधकमेकपदं 'मा रुष मा तुष' इत्याकारकं दत्तं तेन मुनिना द्वादश वर्षाणि पदमेकं भावितं-मथितं-ध्यातं ततो द्वादशवर्षान्ते केवलज्ञानं प्राप्तमिति 'शास्त्रकोटिवृथाऽन्या' माध्यस्थ्य-समतारहिता, स्वभावलाभसंस्कारकारणशून्याऽन्या-बुद्धिविपयकान्धतारूपाज्ञानभृता शास्त्राणां कोटिः-कोटिप्रमाणानि शास्त्राणि वृथैव-निष्फलैव, स्वभावलाभसंस्कारकारणसम्यग्ज्ञानशून्यत्वेन केवलज्ञानादिफलरहितैव 'तथाचोक्तं महात्मना' महात्मना-पतञ्जलिना-ऋषिणोक्तं यत्तदग्रेतनेन श्लोकेन ज्ञाप्यते इति

१ निर्वाणपदमप्येक भाव्यतेवन्मुहुर्मुहुः तदेवज्ञानमुत्कृष्टं ध्यान्व्यमात्रमतस्त्वन्यत् ॥

वादाश्च प्रतिवादाश्च 'वदन्तोऽनिश्चितांस्तथा'=अनिश्चित-संशयादियुक्तशास्त्रज्ञानद्वारा, 'अनिश्चितान्' निश्चितार्थशून्यान् विजिगीषया पूर्वपक्षरूपान् वादान्, उत्तरपक्षरूपान् प्रतिवादान् 'वदन्तो'-स्वपक्षं स्थापयन्तः परपक्षं खण्डयन्तः, वादिनः प्रतिवादिनश्च 'तत्त्वान्तं' तत्त्वस्यान्तं निश्चयं पारं च 'नैव गच्छन्ति' न प्राप्नुवन्त्येवेति यथा गतौ-चक्रवद्गतौ तैलयन्त्रस्थो वृषभः, गत्यन्तं नैव गच्छति तैलयन्त्रचक्रे सदा भ्रमत्येव तथाऽत्रापि ज्ञेयम् ।

तथाहि=हे जीव ! त्वत्पार्श्वे यज्ज्ञानं शास्त्रीयमस्ति तदनिश्चितार्थकं, अनिश्चितार्थकशास्त्रज्ञानेन मासवर्षादिकं यावद् विवादं करिष्यमि, यथा षण्मासान् यावद् रोहगुप्तः षडुलूको गुरुणा सार्धं राजसभायां विवादः कृतः परन्तु पराजितोऽपि पराजयमस्वीकृतवान् गुरुणा सङ्घाद् बहिष्कृतः तद्वत् तत्त्वस्यान्तं-पारं न प्राप्स्यसि, पूर्णानन्दं नानुभविष्यसि, यदा विवादे विजयेनानन्दो भविष्यसि परन्तु स आनन्दो न शाश्वतिकोऽपि तु क्षणिक इत्येवं मा त्वं व्यस्मार्षीः । इदमत्र हृदयम्=वादं च प्रतिवादं कृत्वा तत्त्वनिर्णयाय धावनं तु तैलयन्त्रस्थवृषभतुल्यं गमनं तैलयन्त्रस्थो वृषः प्रातः कालादारभ्य सायं-कालान्तं धावति-परन्तु द्वादशघण्टान्ते तत्रैव तत्रैव दृश्यते तथाऽऽत्मनो यशोलोभेन चक्षुषि पट्टं बद्ध्वा वादं प्रतिवादं-च कुर्वन् धावसि त्वं, मनाक्स्थित्वा चक्षुःपट्टमुद्धाटय पश्य त्वं, आत्मस्वरूपस्य कियती निकटता प्राप्ता, कर्मतैलिकेन तव कण्ठोपरि धूर्वी निक्षिप्ता, ततो भवैक-चक्रे भ्रमसि त्वं, वादप्रतिवादरूपविवादतो

मुक्तो भूत्वा, निश्चितार्थकशास्त्रज्ञानयानेनाऽऽत्मस्वभावं प्रति सम्मुखीनां गतिं प्रगतिं च कुरु त्वमिति ।७३।।७४।।

**त्रिपदीविचारणे चिलातिपुत्रस्य स्वर्गगमनम्—**

इति यतिवदनात् पदानि बुद्ध्वा, प्रशमविवेचनसंवराभिधानि।
प्रदलितदुरितः क्षणाच्चिलाति–तनय इह त्रिदशालयं जगाम ॥७५॥

'यतिवदनात्' मुनीश्वरमुखतः 'प्रशमविवेचनसंवराभिधानि पदानीति बुद्ध्वे'ति प्रशमबोधतः–क्रोधादिविषयकप्रकृष्टशमविचारतःस सुषमामस्तकमसिं च प्रक्षिप्तवान भूमौ आत्मा भिन्नो देहादिति विवेकभावप्रधानविचारतःआत्मशुद्धिप्रधान-स्वरूपध्याने निमग्नो जातोऽथवा विवेकतः जीवादितत्त्वसुदेवादितत्त्वविषयकश्रद्धातः सम्यक्त्वादिप्रादुर्भाववान् जातः, संवरप्रधानविचारतः स्वकृतपापनिन्दापूर्वकपापमात्रत्यागचिन्तनधारातो भावतो महाव्रतादिधारणपूर्वकः, कायोत्सर्ग-क्रियानिरतोऽभवत् , अर्थात् प्रशमविवेचनसंवराभिधानि पदानि बुद्ध्वा-सम्यग् ज्ञात्वा-ध्यात्वा; क्षणात् तत्क्षणात् 'प्रदलितदुरितः'दुष्कृतानि दलयित्वा चिलातितनयः-चिलातिनामकदास्याःपुत्रत्वेनैष प्रसिद्धनामापि चिलातिपुत्रः, 'त्रिदशालयं जगाम नाकिलोकं गतवानिति ॥७५॥


॥ ७१ ॥

अस्य चिलातिपुत्रस्य माध्यस्थ्येन फलं जातं—

न चानेकान्तार्थाऽवगमरहितस्याऽस्य फलितम्, ।
कथं माध्यस्थ्येन स्फुटमिति विधेयं भ्रमपदम् ।
समाधेरव्यक्ताद्यदभिदधति व्यक्तसदृशं ।
फलं योगाचार्या ध्रुवमभिनिवेशे विगलिते ॥७६॥

अनेकान्त-स्याद्वाद-प्रधान-शास्त्रविषयकज्ञानरहितस्य 'अस्य' चिलातिपुत्रस्य माध्यस्थ्यरूपहेतुना कथं स्फुटं-स्पष्टं त्रिपदीज्ञानं फलितं-फलवज्जातं ? इति भ्रमपदं-शङ्कास्थानं न विधेयं-कर्त्तव्यं, यतः समाधेरव्यक्ताद्व्यक्तसदृशं फलं, योगाचार्याः, ध्रुवं विगलितेऽभिनिवेशे सति, अभिदधति'=योगाचार्या हि ध्रुवं-निश्चयतोऽभिनिवेशे-असदाग्रहे विगलिते नष्टे सति अव्यक्तात्-अस्पष्टात् समाधेः-एकप्रत्ययसंतति-पूर्वक विशिष्टैकविषयमात्रभासनरूप-समाधितो व्यक्तसमाधिसदृशं फलमभिदधति-कथयन्तीति ॥७६॥

अध्यात्मपूतात्मनोऽनेकान्ते शास्त्रे विकस्वरभक्तिर्भवति—

१–अभिनिवेशाभावरूपमाध्यस्थ्येनाऽव्यक्तानेकान्तार्थज्ञानत्वेऽपि त्रिपदीज्ञानेन व्यक्तेन व्यक्तफलं जातम्

विशेषादोघाद्वा सपदि तदनेकान्तसमये, ।
समुन्मीलद्भक्तिर्भवति य इहाध्यात्मविशदः ।
भृशं धीरोदात्तप्रियतमगुणोज्जागररुचिः,
यशःश्रीस्तस्याऽङ्कं त्यजति न कदापि प्रणयिनी ॥७७॥

सपदि-तत्क्षणे तत्-माध्यस्थ्यमहितपदज्ञानादिशास्त्रयोगात् कारणात् , योऽध्यात्मविशदः-आत्महितका रिज्ञानक्रियात्मकाध्यात्मपूतात्मा, 'इहानेकान्तसमये' अस्मिन्ननेकान्तस्याद्वादजैनमते, 'विशेषादोघाद्वा' विशेषप्रकारेणाथवा सामान्यप्रकारेण 'समुन्मीलद्भक्तिः'=सम्यग्विकसद्सर्वसमर्पणात्मकभक्तिशाली भवति यो भृशंअत्यन्तं धीरोदात्तानां धीराणामुदात्तानां 'अविकत्थनः क्षमावान् अतिगम्भीरो महासत्त्वः स्थेयान् निगूढमानः धीरोदात्तो,दृढव्रतः कथितः'-(साहित्यदर्पणे) 'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि ते एव धीराः',दाता महान् समर्थ उदात्तः कथ्यते'प्रियतमगुणः केवलिगतोज्जागरदशारूपः तस्मिन् रुचिः, रसो रागो वा यस्य स धीरो-दात्त-प्रियतमगुणोज्जागररुचिर्भवति, तस्य-स्याद्वादशास्त्रगतविकसद्भक्तिशालिनो धीरोदात्तप्रियतमगुणोज्जागररुचेः, यशःश्रीरूपप्रणयिनी कदाप्यङ्कमुत्सङ्गं न त्यजति-तदुत्सङ्गे सदा तिष्ठत्येव ॥७७॥

इति श्री पण्डितनयविजयगणिशिष्यपण्डितपद्मविजयगणिसहोदरोपाध्यायश्री-यशोविजयगणि विरचितेऽध्यात्मोपनिषत्प्रकरणे शास्त्रयोगशुद्धिनामा प्रथमोऽधिकारः समाप्तः, तथाचार्यश्रीमद्‌विजयलब्धि सूरीश्वरपट्टधरविजयभुवनतिलकसूरीश्वरपट्टधरविजयभद्रंकरसूरिणाऽध्यात्मोपनिषत्प्रकरणे रचितायां भुवन-तिलकाख्यायां टीकायां शास्त्रयोगशुद्धिनामा प्रथमोऽधिकारः समाप्तः ।



## —ज्ञानयोगशुद्धिनामा द्वितीयोऽधिकारः—

**ज्ञानयोगं स्वजीवने प्रतिदिन प्रयुञ्जीत—**

दिशा दर्शितया शास्त्रै-र्गच्छन्नच्छमतिः पथि ।
ज्ञानयोगं प्रयुञ्जीत, तद्विशेषोपलब्धये ॥१॥

शास्त्राणां दिग्दर्शकत्वप्रसिद्ध्या 'शास्त्रैर्दर्शितया दिशा' शासनत्राणशक्तिविशिष्टवीतरागवचनरूपैः शास्त्रै र्दर्शितया निःश्रेयसस्य दिशा, 'अच्छमतिः पथि गच्छन्' निर्दम्भबुद्धिकः, सम्यग्दर्शनज्ञानचारित्रात्मकमोक्षमार्गे गच्छन्-गतिं कुर्वन् 'ज्ञानयोगं प्रयुञ्जीत' ज्ञानाचाराराधनारूपयोगस्य प्रयोगं कुर्वीत, किमर्थमिति चेदुच्यते 'तद्विशेषोपलब्धये'=मोक्षमार्गगतस्य (गतौ) महोत्तेजकविशिष्टज्ञानस्य प्राप्तये साक्षात्काराय वा ज्ञानयोगस्याऽवश्यं प्रयोगः कर्त्तव्य इति ॥१॥

**ज्ञानविशेषस्य विवरणम्—**

योगजाऽदृष्टजनितः, स तु प्रातिभसंज्ञितः ।
सन्ध्येव दिनरात्रिभ्यां, केवलश्रुतयोः पृथक् ॥२॥

॥ ७६ ॥

'स तु योगजादृष्टजनितः'=स तु-स ज्ञानविशेषस्तु योगाभ्यासजनितमदृष्टं-धर्मविशेषः, तेन जनितः, योगोऽदृष्टजनितः, ''योगजो द्विविधःप्रोक्तो, युक्तयुञ्जानभेदतः । युक्तस्य सर्वदा भानं, चिन्तासहकृतोऽपरः''॥ युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति । द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति (न्या. सि. मु.) 'स तु प्रतिभसंज्ञितः' केवलार्कारुणोदयरूपानुभवापरपर्यायप्रातिभसंज्ञा-सम्पन्नः. मार्गानुसारिप्रकृष्टोहाख्यज्ञानं प्रातिभज्ञानं, ननु इदमपि प्रातिभं श्रुतज्ञानमेव अन्यथा षष्ठज्ञानप्रसङ्गः । न चैतत्केवलं सामर्थ्ययोगकार्यत्वादस्येति चेदुच्यते नैतच्छ्रुतं न केवलं न च ज्ञानान्तरमिति रात्रि-दिवारुणोदयवत् , अरुणोदयो हि न रात्रि-दिवातिरिक्तो न च तयोरेकमपि वक्तुं शक्यते । तत्काल एव तथोत्कृष्टक्षयोपशमवतो भावात्, श्रुतत्वेन तत्त्वतोऽसंव्यवहार्यत्वान्न श्रुतं, क्षायोपशमिकत्वादशेषद्रव्यपर्यायाविषयत्वान्न केवलमिति । इष्टं चैतत्तारकनिरीक्षणादिज्ञानशब्दवाच्यमपरैरपीत्यदोषः । इति हरिभद्रसूरयः । 'सन्ध्येव दिनरात्रिभ्यां केवलश्रुतयोः पृथक्' यथा दिनरात्रिभ्यां सन्ध्या (सम्+ध्यै+अङ्, सन्धौ भवो यत सा, संध्यायन्त्यस्यां सन्ध्या, सज्येते सन्धीयेते अहोरात्रावस्यामिति वा

१='प्रातिभाद्वा सर्वम्' (यो, ३।३३) यथा सूर्योदयस्य पूर्वलिङ्गं प्रभा तद्वत् प्रसख्यानस्य पूर्वलिङ्गं प्रातिभं ज्ञान इत्यर्थः । स्वप्रतिभोत्थं अनौपदेशिकं ज्ञान प्रातिभ इति उच्यते । अनेन ज्ञानेन करामलकवत् सर्वं जानाति योगी ।)

'सन्जेध्' च । अहोरात्रस्य यःसन्धिः सूर्यनक्षत्रवर्जितः । सा च सन्ध्या समाख्याता (स्मृतिः) पृथक्-भिन्ना कथ्यते एवं केवलज्ञानाच्च श्रुतज्ञानाद् भिन्न एव ज्ञानविशेषोऽस्तीति (क्षपकश्रेणिगमिदं प्रातिभज्ञानं) प्रातिभं यदपि प्रातिभमक्षलिङ्गशब्दव्यापारानपेक्षमकस्मादेवाद्य मे महीपतिप्रसादो भवितेत्याकारं स्पष्टतया वेदनमुदयते, तदप्यतीन्द्रिय-निबन्धनतया मानसमिति प्रत्यक्षकुक्षिनिक्षिप्तमेव, प्रमाणनयतत्त्वालोकालंकारे-पृ. १५४पं-१ स्याद्वादरत्नाकरविवृतौ ॥२॥

सर्वशास्त्राणां व्यापारो दिग्प्रदर्शने एव समाप्तः—

पदमात्रं हि नाऽन्वेति, शास्त्रं दिग्दर्शनोत्तरम् ।
ज्ञानयोगो मुनेः पार्श्वमाकैवल्यं न मुञ्चति ॥३॥

'हि' यतः शास्त्रं 'पदमात्रं' पदं प्रमाणमस्य, 'दिग्दर्शनोत्तरं' दिशो दर्शनादुत्तरं-अनन्तरं-पश्चान्नान्वेति' (पादमार्गं) नानुगच्छति-न सहचरति परन्तु 'ज्ञानयोगो' प्रातिभानुभवात्मकज्ञानविशेषः 'मुनेः पार्श्वमाकैवल्यं सर्वकर्मक्षयात्केवलस्यात्मनो भावः कैवल्यं-निर्वाणं आकैवल्यं= मोक्षपर्यन्तं यावत् मुनेः-विशिष्टज्ञानिनः साधोःपार्श्वं (पार्श्वं स्यादेतयोरधः'-एतयोःकक्षयोरधस्तात्) सामीप्यं न मुञ्चति-न त्यजत्यर्थादेष ज्ञानयोग आकैवल्यमखण्डिततया तिष्ठत्येव मुनौ-ज्ञानिनीति ॥३॥

वस्तुत आत्मनो लक्षकं शास्त्रं न तु दर्शकम्—

तत्त्वतो ब्रह्मणः शास्त्रं लक्षकं न तु दर्शकम् ।
न चादृष्टात्मतत्त्वस्य, दृष्ट-भ्रान्ति निवर्त्तते ॥४॥

तत्त्वतो-वस्तुतः, शास्त्रं=आगमादिकं शास्त्रं, ब्रह्मणो-आत्मनो लक्षकं (प्रतिपादकं-परीक्षकं-परिचायकं ज्ञापकं-शिक्षकमिति यावत्) न तु दर्शकं-दर्शन-साक्षात्कार-प्रत्यक्षकारकं । अत एव 'अदृष्टात्मतत्त्वस्य'= अदृष्टमप्रत्यक्षीकृतं आत्मनामकं तत्त्वं येन सोऽदृष्टात्मतत्त्वस्तस्यादृष्टात्मतत्त्वस्य-आत्मतत्त्वविषयकप्रत्यक्ष-ज्ञानरहितस्य, आत्मा बद्धोऽस्ति वा नवेति आत्मनि बन्धविषये पतितां प्रत्यक्षशङ्कारूपभ्रान्ति दूरी कर्त्तुं शास्त्रं न प्रभवति अर्थात् वस्तुत आत्माऽबद्धोऽस्ति तादृशशास्त्रीयज्ञाने सत्यपि मिथ्याबुद्धेः संस्कारात् स आत्मा बद्धोऽस्ति इदृशं प्रत्यक्षं ज्ञानं भवति, अर्थात् दृष्ट-प्रत्यक्ष-विषयकशङ्कामपनेतुं शास्त्रज्ञानं न प्रभवति, तदा शास्त्रतत्त्वं श्रुत्वा-मत्वा मुहुः स्मृत्वा साक्षादनुभवन्ति ये तेषामनुभवज्ञानानन्तरं दृष्ट-प्रत्यक्षभ्रान्ति निवृत्ता भवति तथाऽत्रापि अप्रत्यक्षीकृतात्मतत्त्वस्य दृष्ट भ्रान्ति र्न निवर्त्तते परन्तु दृष्टात्मतत्त्वस्य दृष्टभ्रान्ति निवर्त्तते एवेति ॥४॥

आत्मदर्शनाऽपेक्षो, ज्ञानेनाऽन्तर्मुखो भवेत्—

तेनाऽऽत्मदर्शनाऽऽकाङ्क्षी, ज्ञानेनाऽन्तर्मुखो भवेत् ।
द्रष्टु र्दृगाऽऽत्मता मुक्ति-र्दृश्यैकात्म्यं भवभ्रमः ॥५॥

लक्षकत्वात्-परिचायकत्वादात्मनः शास्त्रेणात्मदर्शनं न भवति, परन्तु स्वात्मदर्शनं परमेष्टमतः कथ्यते. तेनात्मदर्शनाऽऽका-ङ्क्षी ज्ञानेनाऽन्तर्मुखो भवेत् आत्मप्रत्यक्षस्याऽऽकाङ्क्षावान् पुरुषः तेन-ज्ञानेन-अनुभवात्मकात्मदर्शकज्ञानेनाऽन्तर्मुखः आत्मगुणस्वभावान्तर्दृष्टि-प्रधानो भवेत्-अन्तरात्मा भवेत्, बहिरात्मदशां परित्यजेच्च 'द्रष्टु र्दृगात्मता मुक्ति र्दृश्यैकात्म्यं भवभ्रमः=दृग् (दृश्यतेऽनया दृग्) दृष्टि-र्दर्शनं,(ज्ञानाभिन्नं)आत्मा-स्वभावो यस्य स दृगात्मा तस्य भावः=दृगात्मता, अन्तरात्मदशाभावजन्य आत्मगपरमात्मदशानुभवः द्रष्टृरूपात्मविषयक (ज्ञानाभिन्न)दर्शनस्वभाववत्ता स्वयमहं स्वं पश्यामीति विशिष्ट-ज्ञानेनाऽनुभवो जायतेऽतो द्रष्टृरूपाऽऽत्मविषयकदर्शनस्वभावो मुक्तिरुच्यते, द्रष्टुरात्मनो-द्रष्ट्रात्मभिन्न-सर्वपौद्गलिक-पदार्थरूपदृश्येन सहैक आत्मा-स्वभावो यस्य स दृश्यैकात्मा, तस्य भाव ऐकात्म्यं बहिरात्मदशाभावः- भौतिकदृश्यपरपदार्थगतैकस्वभावः-ममतास्वभावरूपविभावः'अहं परपदार्थैःसहैकात्म्यं करोमी-त्यनुभवेन, आत्मनः पर-पदार्थ-दृश्यगतैकात्मतैव'भवभ्रमः'जन्ममरणादिभवरूपसंसारे भ्रमणमेवार्थात्'आत्म-नाऽऽत्मा द्रष्टव्यः' स्वयं स्वं पश्यतु मा परदृश्येन सहैकात्म्यं करोतु जन इत्युपदेशोऽवगन्तव्य इति ॥५॥

आत्मविषयकज्ञाने मग्नस्य पुद्गललीलायां नाऽनुरागः—

आत्मज्ञाने मुनिर्मग्नः, सर्वं पुद्गलविभ्रमम् ।
महेन्द्रजालवद्वेत्ति, नैव तत्राऽनुरज्यते ॥६॥

चिदानन्दमूर्तिरूपात्मविषयकज्ञाने 'मग्नो मुनिः' समाहितमना लग्नचित्तो मुनिःसर्वं पुद्गलविभ्रमं महेन्द्रजालवद् वेत्ति'=पुद्गलस्य विभ्रमं रूपिविश्वसम्बन्धि–कल्पितललितलीला-बाह्यच्छायाशोभाऽऽडम्बर-विशिष्टभ्रान्तिरूपं सकलं भौतिकरमणीय-विभ्रमं, 'महेन्द्रजालवत्'=मंत्रतंत्रद्रव्यहस्तप्रयोगादिनाऽसंभवद्वस्तुप्रदर्शनवत्–विस्मापकजालमिव जालं, शाम्बरीमायातुल्यं 'वेत्ति' सर्वमसत्यं क्षणविनश्वरं जानाति, स मुनिः 'तत्र'–पुद्गलप्रपञ्चचञ्चलचारुलीलायां 'नानुरज्यते' अनुरागरूपरंगसंगतो न भवतीति ॥६॥

का आध्यात्मिकी सुधा ? किं आध्यात्मिकं विषं ?—

आस्वादिता सुमधुरा, येन ज्ञानरतिः सुधा ।
न लगत्येव तच्चेतो, विषयेषु विषेष्विव ॥७॥

'येन' मुनिना-जगत्तत्वज्ञानिना, ज्ञानरतिः–आत्मज्ञाननिष्ठा रतिः=रमणता-क्रीडा-विशिष्टस्थायि-रसः सा एव सुधा, सुधाभुग्भिरप्यगम्याऽऽध्यात्मिकामृतविशेषज्ञानरतिरूपा सुधा, 'सुमधुरा आस्वादिता=आत्यन्तिकचिदानन्दमाधुर्यधुर्या, निभृतं निपीता, 'तच्चेतो विषयेषु विषेष्विव न लगत्ये'-विति=तस्याध्यात्मिकज्ञानरतिरूपसुधापायिनो यतिनश्चेतः–अन्तःकरणं विषयेषु विषेष्विव न लगत्येव=सदा मारकेषु शब्दादिविषयेषु विषसमानेषु न लगत्येव–न निमज्जति वल्गतीति ।७।

स्वभावचिन्तनद्वारोपनता विषयास्त्यागधर्मायैव—

सतत्त्वचिन्तया यस्याभिसमन्वागता इमे ।
आत्मवान् ज्ञानवान् वेद-धर्मवान् ब्रह्मवांश्च सः ॥८॥

'इमे' अभिसमन्वागता=पुण्ययोगतोऽभितःसमन्तादुपनता इमे विषयाः 'सतत्त्वचिन्तया' भोगानन्तरं इच्छानन्तरं वा बलवदनिष्टनरकाद्यपायदुःखहेतुत्वेनार्थात् स्वरूपचिन्तनेन विषयीकृता अतस्तत्-त्यागाभिमुखः सन् 'स' स पुरुषो,हि 'आत्मवान्'=निश्चयत आत्मस्वरूपवान् 'ज्ञानवान्'=वस्तुस्वरूपविषयकज्ञानवान् 'वेदवान्' आचारांगादिरूपवेदआगमादिमान् ज्ञानाऽपेक्षया, दुर्गत्यादिमहापायरक्षकस्वर्गापवर्गादिसद्गतिसमर्पकधर्मवान् , श्रद्धाज्ञानाचारापेक्षया, 'ब्रह्मवान्' ब्रह्मचर्यधर्मवान् , परमात्मतत्त्वविषयकपूर्णज्ञानवान्, आत्मरतिरूपभावचारित्रवानिति ।

आचारांग-अध्य,३,उद्दे,१- (यस्य मुनेरिमे-प्रत्यात्मवेद्याः समस्तप्राणिगणेन्द्रियप्रवृत्तिविषयभूताः शब्दरूपरसगन्धस्पर्शा मनोज्ञेतरभेदभिन्ना अभिसमन्वागता इति, अभिः- आभिमुख्येन सम्यग्- इष्टानिष्टावधारण- तयाऽन्विति-शब्दादिस्वरूपावगमात् पश्चादागता ज्ञाताःपरिच्छिन्ना यस्य मुने र्भवन्ति स लोकं जानातीति सम्बन्धः, इदमुक्तं भवति-इष्टेषु न राग-मुपयाति नापीतरेषु द्वेषम् , एतदेवाभिसमन्वागमनं,

॥ ८१ ॥

(अभिसमन्वागमनं-ज्ञपरिज्ञया शब्दादिविषयाणां ज्ञानं प्रत्याख्यानपरिज्ञया शब्दादिविषयाणां प्रत्याख्यानं) तेषां नान्यदिति.

'आत्मवान्'-आत्मा ज्ञानादिकोऽस्याऽस्तीत्यात्मवान्, शब्दादिपरित्यागेन ह्यात्माऽनेन रक्षितो भवति, ज्ञानं यथावस्थितपदार्थपरिच्छेदकमस्याऽस्तीति ज्ञानवान्, वेद्यते जीवादिस्वरूपं अनेनेति वेदः-आचाराद्यागमः, सोऽस्यास्तीति वेदवान्, तथा दुर्गतिप्रसृतजन्तुधरणस्वभावः स्वर्गापवर्गमार्गो धर्मोऽस्याऽस्तीति धर्मवान्, एवं ब्रह्म-अशेषमलकलङ्कविकलं योगिशर्माऽथवा अष्टादशधा ब्रह्मचर्यमस्याऽस्तीति ब्रह्मवान् स मुनिः) ॥८॥

सिद्धसाधकयोः को विशेषः?—

विषयान् साधकःपूर्व-मनिष्टत्वधिया त्यजेत् ।
न त्यजेन्न च गृह्णीयात्, सिद्धो विन्द्यात्सतत्त्वतः ॥९॥

'साधकः पूर्वं त्यजेदनिष्टधिया विषयान्'= साधकदशासम्पन्नः पूर्वमादितो बलवदनिष्टत्वबुद्धया-शब्दादिविषया अनिष्टा नरकादिदुःखहेतुत्वेन महाऽपायभूताः सन्तीति ज्ञानेन विषयत्यागवान् भवेत्, 'सिद्धः सतत्त्वतो विन्द्यात्'ज्ञानयोगसिद्धपुरुषस्तु सतत्त्वतः-स्वभावतः-प्रकृतितः, न विषयत्यागी, न विषयग्राही अपितु आत्मज्ञानरूपस्वभावे सदा मग्नतावानेवेति ॥९॥

योगारम्भ-सिद्धयोगयोः कुत्र सुखदुःखे स्तः ?—

योगारम्भदशास्थस्य, दुःखमन्तर्बहिः सुखम् ।
सुखमन्तर्बहिर्दुःखं, सिद्धयोगस्य तु ध्रुवम् ॥१०॥

योगस्य-ज्ञानयोगस्य आरम्भप्रवेशरूपारम्भदशायां तिष्ठति स योगारम्भदशास्थः, तस्य, योगारम्भदशास्थस्य, ज्ञानयोगप्रवेशाभ्यासरूपावस्थास्थायिनः पुरुषस्य, भविष्यति काले कष्टक्रियाबहुलत्वचिन्तयाऽन्तरात्मनि दुःखम् प्रारम्भेऽल्पक्रियारूपप्रयत्नसम्भवेन यथेष्टसुखसाधनोपयोगसम्भवेन बहिर्बाह्य-पुद्गलादौ सुखं, 'सिद्धयोगस्य तु' सिद्धो योगो-ज्ञानयोगो यस्य स, तस्य सिद्धयोगस्य तु आत्मान्तर्गतभावान् पश्यतः पूर्णतामुपागतस्याध्यात्मसाम्राज्यचक्रवर्तिनः सिद्धयोगस्यान्तरात्मनि ध्रुवं सुखमपारं चिदानन्दोऽखण्डः,'बहिर्दुःखम्' बहि र्बाह्यशरीरादिपुद्गले एव दुःखं, उपसर्गपरिषहादिकालेऽपि दुःखानुभवो नात्मनि यतः तद्दुःखजनकपुद्गलकर्मजन्यत्वात् पुद्गल एव पततु-गच्छतु, यस्यास्ति तस्मै दत्तमिति एतादृशभाववान् सिद्धज्ञानयोग्यस्तीति ।

कल्पना-मैत्रीकरुणादिभावनातः सर्वभूतमात्राय मन आदितःसुखं दत्तमेवातोऽन्तरात्मनि सुखमायातं यतो यत् परस्मै दीयते तत् स्वस्मिन्नैवायातीति न्यायात् दुःखं तु शब्दरूपेण शब्दकोश एव स्थितं, उत्कृष्ट-विश्वमैत्रीभावतो विश्वस्मिन् विश्वे उत्कृष्टज्ञानयोगिना वर्त्तमानभवे, भावतीर्थङ्करेणान्तः

सुखिना, सोपक्रमपापापगमनेन परात्मापि दुःखी । यः स सुखीकृतस्तथापि निरुपक्रमपापस्याऽविनाशेन दुःखं परबाह्यात्मनि स्थितमिति ॥१०॥

किं आत्मीयं ज्ञानं ? किं आत्मीयं सुखं ?—

प्रकाशशक्त्या यद्रूप–मात्मनो ज्ञानमुच्यते ।
सुखं स्वरूपविश्रान्ति-शक्त्या वाच्यं तदेव तु ॥११॥

अनन्तशक्तिनिधिरूपस्याऽऽत्मनः प्रकाशनामकशक्त्या (प्रकाशरूपात्मधर्मविशेषेण) 'यद्रूपं' यः स्वभावःस्वलक्षण-रूपतत्त्वं ज्ञानं ज्ञानात्मकः सर्वश्रेष्ठगुण उच्यते-कथ्यते अवबोधस्य प्रकाशरूपत्वं, सर्वप्रकाशानां स्वार्थप्रकाशकत्वेन बोधस्यापि तत्सिद्धिः, ज्ञानं चात्मनः स्वपरप्रकाशकोऽसाधारणगुणः, स चाम्बुधर-पटलपरिमुक्तस्य दिनमणेरिवापास्तसमस्तावरणस्य जीवस्य स्वभावभूतकेवलज्ञानव्यपदेशभाग्भवति, सकल घाति-केवलज्ञानावरणेन कात्स्न्येंन ज्ञानस्यावरणाऽसम्भवात्तदानीं योऽयं मन्दप्रकाशः स केवलज्ञाना-वरणावृतस्य भवति तस्यैव भेदा मत्यादयश्चत्वारः । तादृशे मन्दप्रकाशे केवलज्ञानावरणस्यैव हेतुत्वं स्पष्टप्रकाशप्रतिबन्धकस्यापि तस्य तत्र हेतुत्वं, दृष्टं चोत्कटेऽभ्राद्यावरणे स्पष्टप्रकाशप्रतिबन्धकत्वं मन्दप्रकाशजनकत्वं चेति 'तदेव तु'=आत्मनः प्रकाशस्वरूपं ज्ञानमेव तु स्वरूपविश्रान्तिशक्त्या'=स्व-रूपे स्वभावे रमणता-स्थिरता-अवस्थानरूपविश्रान्तिनामकशक्त्या स्तैमित्यनैश्चल्यनामकधर्मविशेषेण सुखम्

आनन्द इति वाच्यम्-कथनीयमर्थाद् आत्मनःप्रकाशस्वरूपज्ञानं तथाऽऽत्मनि रमणतारूपविश्रान्तिरूपं सुखमुच्यते, प्रकाशस्वरूपज्ञानाभिन्नं स्वस्वरूपविश्रान्तिरूपं सुखमेव, (सुखमपि च न ज्ञानातिरिक्तं किञ्चिदपि तु ज्ञानविशेषरूपमेव, अत्र 'कृत्स्नकर्मविमुक्त्याऽऽत्मनःस्वात्मन्यवस्थान'मित्यनेन संग्रहनयेन मुक्तिरुक्ता, तेन ह्यावरणोच्छित्त्या व्यङ्ग्यं सुख मुक्तिरिष्यते. संसारदशायां जीवस्वभावस्य सेन्द्रियदेहाद्यपेक्षाकारणरूपावरणेनाच्छाद्यमानत्वात्, प्रदीपस्यापवरकावस्थितपदार्थप्रकाशत्वस्वभावस्येव तदावारकवृहच्छरावादिना, तदपगमे तु प्रदीपस्येव जीवस्यापि विशिष्टप्रकाशस्वभावोऽयत्नसिद्ध एवेति ॥११॥

सुखदुःखयो लक्षणम्—

सर्वं परवशं दुःखं, सर्वमात्मवशं सुखम् ।
एतदुक्तं समासेन, लक्षणं सुखदुःखयोः ॥१२॥

सर्वं परवशं दुःखं तल्लक्षणयोगात् सर्वमात्मवशं सुखमत एव हेतोः, एतदुक्तं मुनिना समासेन-संक्षेपेण लक्षणं-स्वरूपं सुखदुःखयोरिति, पुण्यापेक्षमपि सुखं परवशं स्थितं पुण्यस्य परत्वात्, ध्यानजं तात्त्विकं सुखमपरायत्तत्वात्, कर्म-वियोगमात्रजत्वादिति ॥१२॥

ज्ञानमग्नताजन्यं सुखमनुपमम्—

ज्ञानमग्नस्य यच्छर्म, तद्वक्तुं नैव पार्यते ।
नोपमेयं प्रियाश्लेषै-र्नापि तच्चन्दनद्रवैः ॥१३॥

'ज्ञानमग्नस्ये' ति आत्मज्ञानमग्नतावतः पुरुषस्य, 'यच्छर्म' यत्सुखं समुद्भवति तद्वाचामगोचरः, शब्दातीतं वर्तते 'तत्सुखं' प्रियायाः-प्रियतमाया आश्लेषैः-आलिङ्गनैःसह नोपमीयते, तथा चन्दनविलेपनेनापि सह नोपमीयतेऽर्थात् सर्वोपमातीतमद्वैतं शर्म ज्ञानमग्नस्य वर्त्तते इति ॥१३॥

कीदृशसाधोः पर्यायवृद्धितः प्रशमसुखवृद्धिः ?—

तेजोलेश्याविवृद्धिर्या, (साधोः) पर्यायक्रमवृद्धितः ।
भाषिता भगवत्यादौ, सेत्थंभूतस्य युज्यते ॥१४॥

संसारनैर्गुण्यजवैराग्यवान् भूत्वा प्रव्रजितोऽभूत्, यद्दिने साधुर्जातस्तद्दिनादारभ्य चारित्रजगति प्रथम-प्रवेशेनापूर्वानन्दः प्रतिदिनं प्रवर्धमानो दिव्यानन्दमपि लङ्घमानो द्वादशमासिकसंयमपर्याये त्वनुत्तर-विमानवासिनस्तेजोलेश्या (आन्तरसुखं चित्तसुखं सुखासिका) याऽऽसीत्, ततोऽतिशायिनी सा तेजोलेश्या इत्थंभूतस्य-ज्ञानदर्शनचारित्रादियोगे रममाणस्य, आत्मज्ञाने मग्नस्य, पौद्गलिकविषयविषेष्वप्रलग्नस्य,-

परभावपर्यायगतकर्तृत्वबुद्धिरहितस्य-निरञ्जनस्य साधो र्भवतीति भगवतीप्रभृतिसूत्रे तेजोलेश्याविवृद्धिर्भाषिता भगवता महावीरेणेति ।

(भगवती सूत्रे १४ शतक उद्दे.=१, सूत्र-५३७)

जे इमे भंते ? अज्जत्ताए समणा निग्गंथा विहरंति एतेणं कस्स तेयलेस्सं वीतीवियंति ? गोयमा ! मासपरियाए समणे निग्गंथे वानमंतराणं देवाणं तेयलेस्सं वीयीवयंति, दुमासपरियाए समणे निग्गंथे असुरिंदवज्जियाणं भवणवासीणं देवाणं तेयलेस्सं वीयीवयंति, एवं एएणं अभिलावेणं तिमासपरियाए समणे नि० असुरकुमाराणं देवाणं तेय० चउम्मासपरियाए सगहनक्खत्ततारारूवाणं जोतिसियाणं देवाणं तेय. पंचमासपरियाए य सचंदिमसूरियाणं जोतिसिंदाणं जोतिमरायाणं तेय. छम्मासपरिआए समणे सोहम्मीसाणाणं देवाणं. सत्तमासपरियाए सणंकुमारमाहिंदाणं देवाणं अठ्ठमासपरियाए बंभलोगलंतगमाणं देवाणं तेय. नवमासपरियाए समणे महासुक्कसहस्साराणं देवाणं तेय. दसमासपरियाए आणयपाणयआरणच्चुयाणं देवाणं० एकारसमासपरियाए गेवेज्जगाणं देवाणं० बारसमासपरियाए समणे निग्गंथे अणुत्तरोववाइयाणं देवाणं तेयलेस्सं बीयीवयंति, तेण परं सुक्के सुक्काभिजाए भवित्ता तओ पच्छा सिज्झति जाव अंतं करेति । सेवं भंते सेवं भंतेत्ति जाव विहरति (सूत्रं ५३७)

जे इमे इत्यादि ये इमे प्रत्यक्षाः 'अज्जत्ताए' त्ति आर्यतया पापकर्मबहिर्भूततया अद्यतया वा–

अधुनातनतया वर्त्तमानकालतयेत्यर्थः 'तेयलेस्सं' तेजोलेश्यां–सुखासिकां तेजोलेश्या हि प्रशस्तलेश्योपलक्षणं सा च सुखासिकाहेतुरिति कारणे कार्योपचारात्तेजोलेश्याशब्देन सुखासिका विवक्षितेति, 'वीयीवयंति' व्यतिव्रजन्ति-व्यतिक्रामन्ति 'असुरिंदवज्जियाणं' ति-चमरबलिवर्जितानां 'तेणपरं' ति ततः संवत्सरात्परतः 'सुक्केति शुक्लो नामाऽभिन्नवृत्तोऽमत्सरी कृतज्ञः सदारम्भी हितानुबन्ध इति, निरतिचारचरण इत्यन्ये, 'सुक्काभिजाइ' त्ति शुक्लाभिजात्यः परमशुक्ल इत्यर्थः, अत एवोक्तम्–आकिञ्चन्यं मुख्यं ब्रह्मापि परं (सदागमशुद्धम्) सर्वं शुक्लमिदं खलु नियमात्संवत्सराद् ऊर्ध्वम् ॥ एतच्च श्रमणविशेषमेवाश्रित्योच्यते न पुनः सर्व एवैवंविधो भवतीति ॥

उत्तमज्ञानस्य प्रतिपादनम्—

चिन्मात्रलक्षणेनान्य–व्यतिरिक्तत्वमात्मनः ।
प्रतीयते यदश्रान्तं, तदेव ज्ञानमुत्तमम् ॥१५॥

आत्मनः-चैतन्यादिगुणपर्यायात्मकात्मद्रव्यस्य चिन्मात्रलक्षणेन-उपयोग-दर्शनज्ञानरूपचैतन्यस्वरूपेण, चेतनद्रव्यतोऽन्यसर्वाजीवद्रव्येभ्यो व्यतिरिक्तत्वं-व्यतिरेकित्वं-भेदरूपं यदश्रान्तं ( न श्राम्यति स्म ) सन्ततं प्रतीयते-प्रतीति-विषयीक्रियते, 'तदेव ज्ञानं' सर्वाजीवद्रव्यभेदकारक-चिन्मात्रलक्षणात्मविषयकज्ञानमे-

॥ ८८ ॥

वोत्तमं सर्वज्ञानेभ्य उत्तमं-अनुत्तरं ज्ञानं, विशिष्टात्मज्ञानरहितं ज्ञानं न ज्ञानमपित्वज्ञानमेव (अत्रात्मनीतरभेद-साधकचिन्मात्रलक्षणरूपहेतुः केवलव्यतिरेकी वर्तते तथाहि आत्मा, अजीवरूपेतरेभ्यो भिद्यते, चिन्मात्रलक्षणाद् यदितरेभ्यो न भिद्यते न तच्चिन्मात्रलक्षणवद् यथाऽऽकाशम्, अत्रात्मत्वावच्छिन्नं पक्षः, आत्मेतरधर्मास्ति-कायादिद्रव्यपञ्चकभेदः साध्यः, चिन्मात्रलक्षणं हेतुः,यत्र यत्रात्मेतरभेदाभावस्तत्र तत्र चिन्मात्रलक्षणाभावो यथाऽऽकाशम् इतिव्यतिरेकदृष्टान्ते आकाशादावितरभेदाभावरूपसाध्याभावव्यापकता, चिन्मात्रलक्षणाऽभावे गृह्यतेऽत एवात्मेतरेभ्यो न भिद्यते न तच्चिन्मात्रलक्षणवत् , यथाऽऽकाशमिति व्यतिरेकिव्याप्तिर्ज्ञेयेति । एवं प्रकारेण व्यतिरेकव्याप्तिग्रहानन्तरम्——इतरभेदाभावव्यापकीभूताभावप्रतियोगिचिन्मात्रलक्षणवान् आत्मेत्याकारकव्यतिरेकिपरामर्शात् , आत्मत्वाऽच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविशेष्यताक 'आत्मा' इतरेभ्यो भिद्यते इत्याकारकानुमितिर्जायते इति तत्त्वम् , 'यथाऽऽकाश' मित्याकाशं इतरभेदाभाववत् , इतरभेदाभावव्यापकचिन्मात्रलक्षणाभाववच्च । इत्येवंप्रकारेण चिन्मात्रलक्षणाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यते इत्यर्थः न चायं तथा' अयमात्मा, न तथा-न चिन्मात्रलक्षणाभाववान् , 'तस्मान्न तथा चिन्मात्रलक्षणाभाववत्त्वाभावात् इतरभेदाभाववान् न, अत्र-इतरभेदसाधकानुमाने यच्चि-न्मात्रलक्षणवत् , तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति, आत्ममात्रस्य पक्षत्वादिति न्याय-पद्धतिः) ॥१५॥

**सविकल्पक-निर्विकल्पकसमाधिद्वये विशेषः—**

शुभोपयोगरूपोऽयं, समाधिः सविकल्पकः ।
शुद्धोपयोगरूपस्तु, निर्विकल्पस्तदेकदृग् ॥१६॥
आद्यः सालम्बनो नाम, योगोऽनालम्बनः परः ।
छायायां दर्पणाभावे, मुख-विश्रान्तिसन्निभः ॥१७॥

प्रशस्तरागात् सुगुरुविषयकसविनयवन्दनादिक्रियायां, आवश्यकादिक्रियायां, भागवते वचने, जिनवचनप्रणीतश्रावकधर्मविषयकक्रियायां, श्रमणधर्मविषयकक्रियायां प्रमादभावयोगतः, जिनवचनाऽनुसारित्वेन शुभमात्रक्रियायामुपयोगः-शुभोपयोगोऽर्थादभिरूपजिनप्रतिमा-विशिष्टपदवाक्यरचना-पुरुषविशेषगणधरादिमहापुरुषादिरूपशुभालम्बनजन्यप्रशस्तमनोभावोपयोगरूपोऽयं मनःप्रणिधानजन्यः समाधिः सविकल्पकः । 'शुद्धोपयोगरूपस्तु'=निरावरणशुद्धात्मद्रव्यनिरावरण-शुद्धज्ञानोपयोगरूपोऽथवा परमात्मनोऽनन्तगुणेषु अन्तरात्मन एकाग्रतारूपशुद्धोपयोगात्मकसमाधिः, 'तदेकदृग्' तस्मिन् शुद्धोपयोग एवैकदृष्टि-दर्शनविशिष्टः, निर्विकल्पकः समाधिरुच्यते, (जे अणण्णदंसी से अणण्णारामे, जे अणण्णारामे से अणण्णदंसी, आ.लो.२अ.उद्दे.६) योऽनन्यदर्शी भवति स अनन्यरामी भवति योऽनन्यरामी भवति सोऽनन्य-दर्शीभवति (अनन्य=आत्मा) 'आद्यः सालम्बनो नाम योगः' प्रथमःशुभोपयोगरूपः समाधिः 'सालम्बनो योगः' प्रशस्तालम्बनसहितो योगः सालम्बनयोग उच्यते, परो-द्वितीयो निर्विकल्पक-

समाधिस्वरूपशुद्धोपयोगात्मको निरालम्बनः-क्षीणवृत्तिकः स्वात्मनि लयप्राप्तियोगेनाथवा स्वात्मानुभवपरिपाकेन सदा निरालम्बनयोगः कथ्यते आलम्ब्यैकपदार्थे यदा न किञ्चिद्धि चिन्तयेदन्यत्तदा चेतः उपशान्तं स्यात्,शान्ते मनसि ज्योतिः प्रकाशते शान्तमात्मनः सहजं भस्मीभवत्यविद्या,मोहध्वान्तं विलयमेति,ध्यातव्यः परमात्मा सन्निहितो ध्यानतो भवतीति 'छायायां दर्पणाभावे मुखविश्रान्तिमन्निभः'=एवं सालम्बननिरालम्बनात्मकयोगावधुनातनकालापेक्षया षष्ठमसप्तमगुणस्थानकं यावत् परिवर्त्तनशीलौ स्तः, क्षणात्सालम्बनः षष्ठे सप्तमे च क्षणान्निरालम्बनोऽप्रमत्तो भवति। अष्टमगुणस्थानादारभ्योपशमक्षपकश्रेणिगतोत्कृष्टध्यानसमाधियोगतस्त्रयोदशगुणस्थानगतोत्कृष्टनिरालम्बनयोग-रूपदर्पणस्याभावे, षष्ठमसप्तमगुणस्थाने प्राप्य सालम्बननिरालम्बनयोगरूपच्छायायां आत्मरमणतानामकसमाधिरूपमुखस्य प्रतिबिम्बस्थानीय-समाधिसुखप्राप्तिरूपविश्रान्तिरवधार्येति ॥१६॥१७॥

इन्द्रियानिन्द्रियगम्यं न शुद्धद्रव्यलक्षणम्—

यद्दृश्यं यच्च निर्वाच्यं, मननीयं च यद्भुवि ।
तद्रूपं परसंश्लिष्टं, न शुद्धद्रव्यलक्षणम् ॥१८॥

यत्स्वरूपं चर्मचक्षुषा दृश्यं-दर्शनगोचरं, यच्च-यत्स्वरूपं वाचां गोचरं-निर्वाच्यं यद् भुवि मननीयं

यत्स्वरूपं भुवि-पृथिव्यां मननीयं-मनसा गम्यं, तद्रूपं-तत्स्वरूपं बाह्यत्वेन परसंश्लिष्टं बाह्यभावरूपकर्मादि-निर्मितदेहादिसंश्लेष-संयोगयुतं, शुद्धनिरावरण-निर्विकारात्मद्रव्यस्य लक्षणं-असाधारणधर्मस्वरूपं न परन्त्व-शुद्धमावरणसविकारात्मद्रव्यलक्षणमिति. ॥१८॥

शुद्धात्मद्रव्यलक्षणम्—

अपदस्य पदं नास्ती–त्युपक्रम्याऽऽगमे ततः ।
उपाधिमात्रव्यावृत्त्या, प्रोक्तं शुद्धात्मलक्षणम् ॥१९॥

ततः-परसंश्लिष्टशुद्धात्मद्रव्यलक्षणाभावात् अपदस्य-अनामिनः (पदागम्यस्य-शब्दातीतस्य) अनामिनो नामविशेषःकथं मध्यमावैखरी-वाण्या वचनोल्लेखःकार्यते आत्मनः, पदं नाम (वाचकशब्दो) नास्ति-न विद्यते,इत्युपक्रम्याऽऽरभ्यागमे-जिनागमे 'उपाधिमात्रव्यावृत्त्या' प्रोक्तं शुद्धात्मलक्षणम्=पररूपद्रव्यभाव-कर्ममात्रोपाधि (परसन्निधि–परारोपरीत्यास्थितस्यान्यरूपप्राकट्य–उपनाम-परविशेषणादिरूपोपाधि) मात्रस्य व्यावृत्त्या-आत्यन्तिकाभावेन सर्वथा निरुपाधिकत्वं शुद्धस्यात्मनो लक्षणं स्वरूपं प्रोक्तं-प्रकर्षेण कथितमेवेति

(१—'अपयस्स पयं नत्थि'=न विद्यते पदम्-अवस्थाविशेषो यस्य सोऽपदः तस्य पद्यते-गम्यते येनार्थ-स्तत् पदम्-अभिधानं तच्च 'नास्ति' न विद्यते, वाच्यविशेषाभावात्, तथाहि योऽभिधीयते स शब्दरूप-गन्धरसस्पर्शाऽन्यतरविशेषेणाऽभिधीयते, तस्य च तदभाव इति (आचा. लोक. अ. ५. उद्दे. ६) ॥१९॥

एतदर्थं वेदोऽप्यनुभाषते—

यतो वाचो निवर्त्तन्ते, अ (ह्य) प्राप्य मनसा सह ।

इति श्रुतिरपि व्यक्त-मेतदर्थानुभाषिणी ॥२०॥

यतो-यस्माद् ब्रह्मणः (परमात्मन आत्मनो) प्रत्यक्षं, अप्राप्य-अलब्ध्वा, मनसा सह वाचो निवर्त्तन्ते-प्रतिनिवृत्ता भवन्त्यर्थाद् वाङ्मनसयोरगोचरः परमात्मा वा शुद्धात्मेति, श्रुतिर्वेदवाक्यमपि, स्पष्टं 'शुद्धात्मा, वाङ्मनसयोरगोचरः' इत्येतस्यार्थस्यानुभाषिणी-अनुवादिनी-संवादिनी, अस्मदर्थसमानसमञ्जसार्थसंगतिमती श्रुतिर्बोध्येति ॥२०॥ (१=तैत्तिरीयोपनिषद्.२=४.)

विशुद्धानुभवं विना परं ब्रह्मागम्यमस्ति—

अतीन्द्रियं परं ब्रह्म, विशुद्धाऽनुभवं विना ।

शास्त्रयुक्तिशतेनाऽपि, नैव गम्यं कदाचन ॥२१॥

'अतीन्द्रियं परं ब्रह्म' इन्द्रियमनोगोचरातीतं परं ब्रह्म-परमात्माऽथवा विशुद्धात्मा, 'विशुद्धानुभवं विना निरुपाधिकनिरन्तरायसमर्थविशुद्धाऽनुभवरूपप्रातिभज्ञानं विना, शास्त्रस्य च युक्तीनां शतेनाऽपि-कदाचन नैव गम्यं, अर्थात् शासनत्राणशक्तिविशिष्टशास्त्रप्रतिपादितयुक्तिशतेनापि नैव परं-ब्रह्म-परमात्मा

॥ ९३ ॥

अर्हत्सिद्धात्मकः तथा विशुद्धात्मा, नैव-कदाचन-कस्मिंश्चिदपि काले गम्यं-साक्षाल्लभ्यं नैव परन्तु यदि श्रुतकेवलमध्यवर्तिना सूर्यारुणोदयसमानविशुद्धानुभवेनातीन्द्रियमपि परं ब्रह्म गम्यमस्ति, परब्रह्मप्राप्तेरेक एव पन्था विशुद्धानुभवोऽस्तीति शास्त्रशतेनाऽपि युक्तिशतेनाऽर्थात् आगमोपपत्तिभ्यां परब्रह्मोपलब्धिरगम्येति. ॥२१॥

आगमोपपत्तिभ्यां जन्यकार्यानुभवस्य समन्वयः—

केषां न कल्पनादर्वी, शास्त्रक्षीरान्नगाहिनी ।
विरलास्तद्रसास्वाद—विदोऽनुभवजिह्वया ॥२२॥

प्राक्कारणरूपशास्त्रज्ञानं क्षीरान्नं (पायसं) अनिवार्यतया पाचनयोग्यं, क्षीरान्नं ज्वलितं स्वादहीनं मा भूदेतर्थं कल्पनानामकदर्वीचालनं सततं तत्र कर्त्तव्यमेव तथा युक्तिं तर्कबुद्धिं विना शास्त्रज्ञानरूपक्षीरान्नपाकोऽशक्यप्रायोऽतस्तर्कबुद्धिरूपकल्पनादर्व्या प्रचालनं पुनःपुनः कार्यमेव तर्कबुद्धिकल्पनादर्वीतोऽविनाभाविशास्त्रज्ञानं क्षीरान्नं, शास्त्रज्ञानाऽविनाभाविविशुद्धानुभवनामकजिह्वा, तत्र कल्पनादर्वी, शास्त्र क्षीरान्नगाहिनी-चालनक्रियासहायिका, शास्त्रज्ञेन क्षीरान्नं भोज्यं भोग्यम् , तत् क्षीरान्नरसास्वादकारिकाऽनुभवजिह्वाऽस्ति, तया अनुभवनामकजिह्वया, क्षीरान्नरूपशास्त्रज्ञानरसाऽऽस्वादवेत्तार आत्मानो विरलाःस्वल्पसंख्याका एवात एव केषां-शास्त्रज्ञानां पुरूषाणां कल्पनादर्वी-युक्तितर्करूपा घृतलेखनी, शास्त्रनामक-

क्षीरान्नपरमान्नावगाहिनी-आमिका न परन्तु विशुद्धानुभवनामकजिह्वया, शास्त्रज्ञाननामकपायसरसास्वाद-वेत्तारः पुरुषास्तु विरलाः कतिपये इति. ॥२२॥

शास्त्रदृष्टेः परं निर्द्वन्द्वं ब्रह्मास्ति—

पश्यतु ब्रह्म निर्द्वन्द्वं निर्द्वन्द्वानुभवं विना ।
कथं लिपिमयी दृष्टिः, वाङ्मयी वा मनोमयी ॥२३॥

लिपिमयीति=लेखने उपयोगिन्यः, अकाराद्यक्षराऽऽकाररूपा ब्राह्म्याद्या लिपयः, तन्मयी लिपिमयी, मुखद्वारोच्चार्यमाणाऽकारादिहकारान्तवर्णपद-वाक्यात्मकव्यञ्जनाक्षरमयी वाक्प्रचुरा वाङ्मयी, इन्द्रिय-मनोनिमित्तकश्रुतग्रन्थानुसारिश्रुतज्ञानोपयोगरूपलब्ध्यक्षरमयी दृष्टिर्मनोमयी, शास्त्रदृष्ट्यन्तर्भावशक्या, लिपिमयी-वाङ्मयी-मनोमयीरूपदृष्टित्रयी, 'निर्द्वन्द्वं'=द्रव्यकर्मभावकर्मरूपद्वन्द्वातीतं, 'ब्रह्म' परमात्मानं-विशुद्धात्मानं वा 'निर्द्वन्द्वानुभवं विना' रागद्वेषतःपरं, इन्द्रियानिन्द्रियाभ्यामन्यं, अनुकूलताप्रतिकूलता-भिन्नं माध्यस्थ्यमयं विशिष्टज्ञानरूपानुभवं विना 'कथं पश्यतु' केन प्रकारेणाथवा कया दृष्टया निरीक्षतां-? न कयाऽपि बाह्यदृष्ट्या चर्मयन्त्रदृष्टयापि द्रष्टुं कोऽपि समर्थः, लौकिकदृष्ट्या विशिष्टयाऽपि न ब्रह्म साक्षात् क्रियतेऽपितु विशुद्धालौकिका-पूर्वानुभवज्ञानेन निःसंशयमवश्यमेव दृश्यते इति ॥२३॥

चतुर्थी सदोज्जागरदशैवानुभवदशाऽस्ति—

न सुषुप्तिरमोहत्वान्नापि च स्वापजागरौ ।
कल्पना–शिल्पविश्रान्ते-स्तुर्यैवाऽनुभवो दशा ॥२४॥

'अनुभवो न सुषुप्तिः' सुषुप्तौ मनसो विचाराभावाद् विकाराभावाद्वा घोरनिद्रा वर्त्तते गाढदर्शनावरणीयकर्मोदयवती दशारूपा सुषुप्तिरस्ति (अविद्यात्मिका हि सा महासुषुप्तिर्यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः इत्याध्यात्मिकी महासुषुप्तिः) अनुभवो मोहरहितोऽस्ति, सुषुप्तिर्महामोहसहिताऽस्ति, निद्रा तु चैतन्यस्याविस्पष्टता तमसाऽऽवृतघटवदव स्थानं निद्रोदयाद्धि जीवस्तमोऽवस्थायामवस्थितो भवति अत एव निद्राविशेषः सुषुप्तिरुच्यते, अमोहत्वाद् ''अनुभवो न स्वापजागरौ'=निद्रितावस्थागतस्वप्नवतीदशायां. यद्यपि स्वप्नो भव्योऽपि मनोमोहकोऽपि महानपि तथापि मनःकल्पनां विना नास्त्यन्योंऽशो वास्तविकतायाःयदाऽनुभवदशायां कल्पनाया अंशो नास्ति तस्मात् स्वापदशायामनुभवांशोऽपि नास्ति, अतः स्वप्नभिन्नाऽनुभवदशाऽस्त्येवं 'नाऽनुभवो जागरदशा' यतः-चैतन्यस्य विस्पष्टतासद्भावेऽपि कल्पनाशिल्पस्य विद्यमानताऽस्ति, जाग्रद्दशात उत्तरकालं स्वप्नादिदशोत्पत्तिरस्ति, यदोज्जाग्रत्-सदाऽऽकालंज ग्रद्दशा स्यात्तदनन्तरं न स्वापनिद्रादिदशायाः कदाचन सम्भवोऽतो 'नानुभवो जागरदशेति कथ्यते, कल्पनाशिल्पविश्रान्तेस्तुर्यैवानुभवो दशा कर्ममनोमोहादिजन्य-कल्पनानामकशिल्पस्य सर्वथा विश्रामाद्-

विरामाच्चतुर्थी उज्जागर-सर्वथोत्कर्षेण जाग्रच्चैतन्यविस्पष्टतामयदशा, केवलज्ञानज्योतिर्मयीदशारूपोऽनुभवस्तु सर्वथा मोहरहितः सूपपादो वर्त्तते ।

(स च (जीवः) जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान् । तत्र जाग्रद्दशा नामेन्द्रियजन्यज्ञानाऽवस्था । अवस्थाऽन्तरे इन्द्रियाभावान्नातिव्याप्तिः । इन्द्रियजन्यज्ञानं चान्तः करणवृत्ति । स्वरूपज्ञानस्य (चैतन्य-रूपस्य) अनादित्वात् । अन्तःकरणवृत्तिः-अन्तःकरणस्य तत्तत् पदार्थस्याकारतुल्या भवन्ती स्थितिः । इन्द्रियाऽजन्या-इन्द्रियव्यापारोपरमकालीना विषयगोचरा-कल्पितगजाद्यधिष्ठानाकारा, अपरोक्षाऽन्तःकरणाऽवस्थाविशेषः स्वप्नाऽवस्थेत्यर्थः । अविद्या (अज्ञान) विषयिणी अविद्यावृत्तिः-आविद्यकवृत्तिः सुषुप्तिरित्यर्थः । एवं च जाग्रदाद्यवस्थात्रयाऽन्यतमत्वं जीवस्य तटस्थलक्षणम् । अत्र केचिन्मरणमूर्च्छयोरवस्थान्तरत्वमाहुः, अपरे तु सुषुप्तावेव तयोरन्तर्भावमाहुः । वेदान्तपरिभाषायां)

(माण्डुक्योपनिषदि विशुद्धान्तरिकचैतन्यस्यावस्था तुरीयावस्था) ॥२४॥

शब्दब्रह्मज्ञानानन्तरं परं ब्रह्माऽधिगम्यते—

अधिगत्याऽखिलं शब्द-ब्रह्म शास्त्रदृशा मुनिः ।
स्वसंवेद्यं परं ब्रह्माऽनुभवेनाऽधिगच्छति ॥२५॥

'मुनिःशास्त्रदृशाऽखिलं शब्दब्रह्माधिगत्ये' ति=जगत्तत्त्वज्ञानी मुनिः शास्त्रैकचक्षुषा, समस्तं शुश्रूषादिग्रहणादिनस्तात्पर्यान्तं शब्दब्रह्म-श्रुतज्ञानरूपं ब्रह्माधिगत्य-प्राप्यार्थाद् शास्त्रदृष्टिं विना शास्त्रज्ञानमसम्भवि-शास्त्रदृष्टयविनाभाविसमस्तशास्त्रज्ञानं, तदनन्तरमेव, 'स्वसंवेद्यं परं ब्रह्माऽनुभवेनाऽधिगच्छति=स्वसंवेदनप्रकाशगम्यं 'परं ब्रह्म'=परमात्मानं, परमपदरूपनिर्वाणं वा स्वविशुद्धात्मानं अनुभवेन (१) यथार्थवस्तुस्वरूपोपलब्धिपरभावाऽरमण-तदास्वादनैकत्वरूपानुभवेन (२) प्रातिभज्ञानरूपानुभवेनाधिगच्छति-प्राप्नोतीत्यर्थः ॥२५॥

स्वसमयपरसमयस्थयो र्भेदज्ञानम्—

ये पर्यायेषु निरतास्ते ह्यन्यसमयस्थिताः ।
आत्मस्वभावनिष्ठानां, ध्रुवा स्वसमयस्थितिः ॥२६॥

ये महात्मानः, आत्मस्वभावाद्भिन्नेषु क्षणिकेषु वस्तुनो अवस्थाविशेषोपर्यायेषु निरताः-नितरां परायणाः-रमणतावन्तस्ते पुरुषा हि-निश्चयतः 'अन्यसमयस्थिताः' परसमये स्वसमयसिद्धान्तविरूद्धान्यसिद्धान्ते स्थितिमन्तो ज्ञेयाः, 'आत्मस्वभावनिष्ठानां ध्रुवा स्वसमयस्थितिः' आत्मनो गुणात्मकस्वभावेषु-शाश्वतेषु निष्ठानां-नितरां स्थितिमतां ध्रुवा-नित्या स्वसमयस्वसिद्धान्तस्थितिः कथ्यते ।

अत्रेदं किञ्चित्स्मरणीयं लिख्यते तथाहि यः सदा शुद्धात्माऽनुभवः स स्वसमय उच्यते य आत्म-

॥ ६८ ॥

भिन्नपुद्गलरूपपरपदार्थप्रतिच्छायायां रमणता यत्र स परसमय उच्यते गुरुत्वपीतत्वस्निग्धत्वादिप्रकाराः पर्यायाः कनकस्य, तेषु रमणतारूपा या दृष्टिः सा पर्यायदृष्टिः, तां परिहाय सर्वपर्यायान्वयिरूपाखण्डस्वर्णादितुल्य-द्रव्ये दृष्टिः रमणतारूपेण रक्षणीयेति विधीयतेऽत्रेति ।

(स्वसमयोऽनेकान्तात्मकवस्तुस्वरूपप्ररूपणात् , परसमयः—केवलनयाऽभिप्रायप्रतिपादनादिति. अनेकान्त व्य. प्र.)

(आचार्य—शङ्करेणोक्तं हि आकारस्य वास्तविकं परिवर्त्तनं तदा हि कथ्यते यदि आकारःस्वीय—सत्तां पृथग् रक्षितुमलं स्यात् । आकारस्तूपादानद्रव्यस्यैकावस्थारूपोऽस्ति, यस् तद्—द्रव्यतोऽविच्छिन्नोऽस्ति, अत आकारस्य स्वतंत्राऽस्तित्वस्य कल्पनाऽपि कर्त्तुं न शक्यते एवं चाकारस्य परिवर्त्तनं दृष्ट्वाऽऽकारस्य वास्तविकं परिवर्त्तनं ज्ञातुं नोचितमेव,यथा कश्चिद् शेते, उत्तिष्ठति, उपविशति तथापि स एव ज्ञायते नाऽन्यः कश्चिद् अतोऽन्याऽन्याकाराणां यत्प्रत्यक्षं भवति, तत्प्रत्यक्षाभासरूपमेव ज्ञेयं अनया युक्त्या विवर्त्तवादसिद्धिर्भवति, एतद् विवर्त्तवादानुसारेण ज्ञायते हि यत्प्रत्यक्षतो दृश्यमानो वास्तविकाकारः (परिवर्तनं) केवलमानसिकारोपो वा विक्षेपमात्रं, तदेव शङ्कराचार्येण 'अध्यास' इति शब्देन परिभाष्यते । संस्कृत. अ.वेदान्तप. हीन्दी प्रस्ता.) ॥२६॥

शुद्धानुभवसंवेदन-योग्यं परमात्मस्वरूपमस्ति—

आवापोद्वापविश्रान्ति—र्यत्राशुद्धनयस्य तत् ।
शुद्धानुभवसंवेद्यं, स्वरूपं परमात्मनः ॥२७॥

'यत्र' यस्मिन् परमात्मस्वरूपे, 'अशुद्धनयस्य' अशुद्धव्यवहारनिश्चयात्मकनयस्य, 'आवापोद्वापविश्रान्तिः'[1] =आवापोद्वापयोः–अनुवृत्तिव्यावृत्त्योः–प्रवृत्तिनिवृत्त्योः–अन्वयव्यतिरेकयोरूहापोहयोः (आवापोद्वापाभ्यां वाच्यवाचकभावसम्बन्धज्ञानं समुदेति, एवं व्यवहारादपि शक्तिग्रहः यथा प्रयोजकवृद्धेन घटमानयेत्युक्तं तच्छ्रुत्वा, प्रयोज्यवृद्धेन घट आनीतः। तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति, ततश्च घटं नय, गामानयेत्यादावावापोद्वापाभ्यां (ग्रहणाऽग्रहणाभ्यां नयनाऽऽनयनाभ्यां) घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति) विश्रान्ति र्विरामभावः समाप्तिर्वर्त्तते अर्थात् अत्र अशुद्धनयस्य सर्वथा सम्बन्धाभावः तत् परमात्मनः स्वरूपं शुद्धाऽनुभवसंवेद्यं=तत् परमात्मनः-वीतरागस्य भगवतःस्वरूपं-स्वभावरूपलक्षणं शुद्धेनाऽनुभवात्मकज्ञानेन-निरावरणपूर्वोक्तस्वरूपाऽनुभवज्ञानेन संवेदनप्रत्यक्षयोग्यं भवतीति ॥२७॥

**गुणस्थानात् परो मार्गणातः परः परमात्मा भवति वा न वा ? —**

१–आवापः कस्यचित्पदस्य प्रक्षेपः। उद्वापः कस्यचित्पदस्य निःसारणम् ।

गुणस्थानानि यावन्ति, यावन्त्यश्चाऽपि मार्गणाः ।
तदन्यतर-संश्लेषो, नैवाऽतः परमात्मनः ॥२८॥

'गुणस्थानानि यावन्ति'=यत्र यत्रापूर्वगुणाऽऽविर्भावस्तत्तद् गुणस्थानमिति, भव्यजीवानां निःश्रेणिरिव सिद्धि-सौधमारुरुक्षूणां गुणाद् गुणान्तररूपाणि विश्रामधामानि चतुर्दशसंख्याकानि, तत्र मिथ्यात्वसास्वादनमिश्राविरतदेशविरतसर्वविरतप्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिकरणसूक्ष्मसम्परायोपशान्तमोहक्षीणमोह— सयोग्ययोगिभेदाच्चतुर्दशविधानि गुणस्थानानि, यावन्ति चतुर्दशगुणस्थानानीत्यर्थः, 'यावन्त्यश्च मार्गणाः' =मार्गणाः-मार्ग्यन्ते आभिरिति मार्गणाः, पर्यालोचनाहेतुभूता अन्वयिधर्माः पदार्थान्वेषण-स्थानानि वा, तत्र गतीन्द्रियकाययोगवेदकषायज्ञानसंयमदर्शनलेश्यासम्यक्त्वसंज्ञ्याहारकरूपाश्चतुर्दश मूलभूता मार्गणाः, तत्र नरगतिपञ्चेन्द्रियजातित्रसकायभव्यसंज्ञियथाख्यातक्षायिकाऽनाहारककेवलज्ञानकेवलदर्शनेषु मोक्षो, न शेषेषु, अत्र यथासम्भवं प्रत्युत्पन्नानन्तरपश्चात्कृतनयाऽपेक्षया मुक्तिः, योगवेदकषायलेश्यामार्गणासु न मोक्षः ।

यावन्त्यो मूलभूताश्चतुर्दशमार्गणाःसन्ति तथापि 'तदन्यतरसंश्लेषो, नैवाऽतः परमात्मनः'=तयोर्गुणस्थानमार्गणयोरन्यतरेणाथवाऽन्यतरया सह नैव संश्लेषः-संयोगः, 'अतःपरमात्मनो नवेति'(पाठे)=अस्माद् भवस्थकेवलिअभवस्थसयोगिकेवलिसिद्धद्वयान्यतररूपपरमात्मनो भवति न वा भवति, अर्थादेकस्माद्भव-

स्थकेवलिपरमात्मनः, त्रयोदशगुणस्थानादिमार्गणासंयोगो भवति, अथवाऽभवस्थकेवलि-सिद्धपरमात्मनो न भवति यतः सिद्धा गुणस्थानातीता भवीयमार्गणारूपस्थानातीता अपि विवक्षया क्षायिकानाहारककेवलज्ञान-केवलदर्शनात्मकत्रिचारणास्थानरूपमार्गणा-गणनागणिताःकथ्यन्ते इति ॥२८॥

आत्मगतकर्मोपाधिजन्यभावनिश्चयेन परमात्मरूपं न जानाति—

कर्मोपाधिकृतान् भावान् य आत्मन्यध्यवस्यति ।
तेन स्वाभाविकं रूपं, न बुद्धं परमात्मनः ॥२९॥

कर्मनामकोपाधि-परसम्बन्धेन कृतान्-कर्मपरिणामरूपजन्मादिकभावान्, य आत्मनि-आत्मत्वावच्छिन्न आत्मनि, अध्यवस्यति-(आरोपरूपेण) निश्चिनोति, अर्थात्, 'आत्मा, औपाधिक-जन्मादिभाववानेव' आत्मा चैतन्यादिस्वभाववान् नेति विपर्यस्तबुद्धिमान्, संसारी आत्मा, प्रच्छन्नभावेन केवलज्ञानादिमान्, प्रादुर्भावेण क्षायोपशमिकज्ञानादिरूपचैतन्यविशिष्टोऽस्तीति न मन्यते, 'तेन स्वाभाविकं रूपं न बुद्धं परमात्मनः'-आत्मनि, औपाधिकजन्मादिभावविषयकमतवता, तारतम्येनापि प्रादुर्भावतः क्षायोपशमिकज्ञानादि-स्वभावमवगणयता तेन पुरुषेण, 'परमात्मनः' परमत्वविशिष्टात्मनःप्रादुर्भावतःस्वाभाविकं-क्षायिकं परमं प्रकृष्ट-कोटिप्राप्तं चैतन्यं ज्ञानादिकं चिद्रूपरूपं न बुद्धं, यदि जन्मादिविकारिभावाः आत्मनो नो स्वभावा अपितु कर्मौपाधिका इति मत्वा तदनन्तरं आत्मा, प्रच्छन्नभावेन केवलज्ञानादिमान् प्रादुर्भावतस्तारतम्येन

क्षायोपशमिकज्ञानादिरूपचैतन्यविशिष्टोऽस्तीति मतवता पुरुषेण परमात्मनःस्वाभाविकं रूपं ज्ञातमेवेति य आत्मस्वरूपं वेत्ति स परमात्मस्वरूपं वेत्ति, यः परमात्मस्वरूपं वेत्ति स आत्मस्वरूपं वेत्तीति व्याप्तिरप्यवधार्या ॥२९॥

अविवेकेन कर्मस्कन्धप्रभाव आत्मनि, उपचर्यते—

यथा भृत्यैः कृतं युद्धं स्वामिन्येवोपचर्यते ।
शुद्धात्मन्यविवेकेन कर्मस्कन्धोर्जितं तथा ॥३०॥

यथा भृत्यैः भृतियोग्यै र्योधैः कृतं युद्धं योधकृतयुद्धपरिणामरूपजयपराजयात्मकं, अथो जनो वक्ति-राजा विजयी जातः, राजा पराजयी जातः, युद्धं कुर्वन्ति योधास्तथापि स्वामिनि-राजन्येव कल्प्यते, युद्धकर्तारो योधाः जयपराजयफल-भोक्तारः स्वामिनः, केन युद्धं कृतं ? को विजयी वा पराजयी जात ? इत्यादि प्रश्ने, युद्धं वा तज्जन्य-जयपरजयात्मक-फलमपि राज्ञ्येवोपचर्यते तथा यद्यपि अविवेकेन, देहात्माऽभेदरूपेण कर्मपुद्गलस्कन्धरूप-पुण्यपापोपचयो जायते-उत्पद्यते तथापि शुद्धे-अविकारिणि आत्मनि उपचर्यते व्यवह्रियते आरोप्यते यथाऽयं आत्मा पुण्यशाली, अथवा पापः पापभाग् वा वस्तुतः कर्मकृतभावानां कर्त्ता नास्त्यात्मा, आत्मा-तु स्वभावस्यैव कर्त्ता, परन्तु अविवेकजन्यं कर्मात्मनोरेकत्वमीदृशं जातं कर्मकृतभावानां कर्त्तृत्वं जातं, कर्मकृतभावानां कर्तृत्वमात्मन्यवभासते इयमेवाऽविवेकवती दशा, कर्मबन्धहेतुभूताऽतो भव-भ्रान्तिर्ज्ञेयेति॥३०॥

॥१०३॥

अज्ञानी कर्मपरिणामं चिद्रूपे व्यवहरति—

मुषितत्वं यथा पान्थगतं पथ्युपचर्यते ।
तथा व्यवहरत्यज्ञश्चिद्रूपे कर्मविक्रियाम् ॥३१॥

यथा मार्गं गच्छन् पान्थश्चोरैर्मुषितः संस्तथापि मार्गेणाहं मुषित इति लोकेन लोके गीयते तथाऽज्ञो-मूढो, विक्रियावन्तः पुद्गलाः सन्ति, तथाऽविकारि-चिद्रूप-आत्मनि व्यवहरति-कल्पयति, तस्करैर्मुषितो न मार्गेण, कर्मैव विकारि, आत्मा चिद्रूपोऽविकारी जन्मादि विभावपरिणामवान् नेति वास्तविकमस्ति ॥३१॥

कर्मण आगमनं कुतो भवति ? यतस्तत्र ज्ञानी न दोषभाग्—

स्वत एव समायान्ति, कर्माण्यारब्धशक्तितः ।
एक-क्षेत्राऽवगाहेन, ज्ञानी तत्र न दोषभाग ॥३२॥

यत्राकाशप्रदेशे कर्माऽणवः सन्ति तत्रात्माऽप्यस्ति, 'स्वत एव समायान्ति कर्माण्यारब्धशक्तितः' स्वतः-स्वयमेव, आरब्धशक्तितः-देहादेरारम्भकाद्दृष्टशक्तितः, तत्तच्छरीरभोगजनकं हि यत्कर्म तत् प्रारब्धं तच्छक्तितो वा अनादिकालीन-तत्तत्-पुद्गलादि-सम्बन्ध-योग्यतानामकसहजभावमलशक्तितः कर्माणि-कर्मपुद्गलाणवः, स्वयमेव, आत्मसमीपे योगेन एकक्षेत्रावगाहनाऽपेक्षया समायान्ति-आगच्छन्ति स्पृशन्ति,

'तत्र ज्ञानी न दोषभाग्'-ज्ञानदशायाः समवधानात्, रागद्वेषाभावतः, कषायदशावशाऽभावतः, ज्ञानी, तत्र कर्मण आगमने-आनयने न दोषपात्रमतो ज्ञानिनि न कर्मलेपो भवतीति ॥३२॥

ज्ञानदशावशिनो वशिनो नो प्रवृत्तयो बाधायै—

दारुयन्त्रस्थपाञ्चाली—नृत्यतुल्याः प्रवृत्तयः ।
योगिनो नैव बाधायै, ज्ञानिनो लोकवर्तिनः ॥३३॥

दारोः-काष्ठस्य यद् यन्त्रं तत्रस्था या पाञ्चाली पुत्तलिका, तस्या यन्नृत्यं-नाट्यं तत्तुल्याः-समानाः प्रवृत्तयः,काष्ठपुत्तलिका, नृत्यति, कूर्दति, पतति, तिष्ठतीत्यादिकासु क्रियासु यथा पुत्तलिकान्तः, हर्षशोकादिका भावा न स्पृशन्ति, सूत्रधारेण प्रेरिता पुत्तलिका करोति क्रियां तथा लोकवर्तिनः, सम्यग्दृष्टि ज्ञानिनो योगिनोऽपि भोगादिप्रवृत्तिषु रागादिभावान् न कुर्वन्ति परन्तु निकाचितभोग्यावलिकर्मनोदिता वैराग्यानासक्तियोगतो वर्त्तन्ते, विषये प्रवृत्तानां सतामपि विरक्तानां भोगप्रवृत्तिर्न ज्ञानयोगवैराग्यबाधिका यतः स्वतो न प्रवर्त्तन्ते इति ॥३३॥

ज्ञानिनः क्रियापि विवेकतो नौचित्यमतिवर्त्तते—

प्रारब्धादृष्ट जनिता (त्) (सामयि) सामायिकविवेकतः ।
क्रियाऽपि ज्ञानिनो व्यक्ता-मौचित्तीं नातिवर्त्तते ॥३४॥

'प्रारब्धादृष्ट-जनिता'= निकाचितकर्मोदयजाता, ज्ञानिनो सम्यग्ज्ञानवतो भोगादिकक्रियाऽपि सामयिक–विवेकतः-समयकालज्ञानजन्योऽथवा जैनप्रवचनविषयकसम्यक्प्रबोधजन्यः समताजन्यो यो विवेकस्तस्मात् 'व्यक्तामौचितीं नातिवर्त्तते' सामयिकविवेकव्यञ्जकतो 'व्यक्तां'-स्पष्टां-प्रकाशितां 'औचितीं' (उचितस्य भावःष्यण्ङीप्) उचिततां-योग्यतां नाति-वर्त्तते-नातिक्रामति नोल्लंघयति अपितु ज्ञानिनिष्ठैतादृशी क्रियाऽपि पूर्वोक्तविवेकप्रकाशितमौचित्यं नोल्लंघतेऽपित्वौचित्यमाचरत्येव (नन्दिषेणमुनेर्दृष्टान्तोऽत्रोत्तारणीयः ॥३४॥

को लिप्यते ? को न लिप्यते कर्म-कज्जलेन?—

संसारे निवसन् स्वार्थ–सज्जः कज्जलवेश्मनि ।
लिप्यते निखिलो लोको, ज्ञानसिद्धो न लिप्यते ॥३५॥

'कज्जलवेश्मनि संसारे निवसन् स्वार्थसज्जो निखिलो लोको लिप्यते'=भित्तिद्वारतोरणकपाटवेदिकापक्षद्वारान्तर्द्वारबहिर्द्वारादिसर्वतःकज्जलमयगृहरूपे जन्मादिदशारूपसर्वोपाधिमये संसारे 'निवसन्'-नितरां वासं कुर्वन्, 'निखिलो लोकः-'-समस्तजीवलोकः, 'स्वार्थ-सज्जः सन् लिप्यते'-स्वस्य ये इन्द्रियार्थाः मनोहरशब्दरूपरसगन्धस्पर्शादिविषयरूपा अर्थाः तेषु अथवा संसारसुखतत्साधनरूपकामार्थरूपस्वार्थ-स्वेच्छाविषयभूतवस्तुसमुदायरूपार्थे सज्जः–प्रगुणः–सङ्गाभिष्वङ्गवान्-सन्नद्धो भवति, स्वार्थसज्जतायां सत्यां

॥१०६॥

समस्तलोकः कर्मनामकपुद्गलैर्लिप्तो भवति, अर्थात् स्वार्थसिद्धयै विवेकभ्रष्ट उचितानुचितं नहि विचारयन् पापक्रियानुचितक्रिया-विपरीतानिष्टानुबन्धिनीं क्रियां कुर्वन्, पौद्गलिकानिष्टादृष्टकर्मभिर्बद्धो भवति परन्तु परमज्ञानप्रकाशसिद्धिसम्पन्नो ज्ञानरसायनसिद्धिसंयुक्तः कर्मकज्जलेनैव 'न लिप्यते'=लिप्तो-बद्धो न भवतीति ॥३५॥

आत्मा, पुद्गलभावरूपजगतःकर्त्ताऽस्ति वा न वा ?—

नाहं पुद्गलभावानां, कर्त्ता कारयिताऽपि च ।
नाऽनुमन्ताऽपि चेत्यात्म-ज्ञानवान् लिप्यते कथं ? ॥३६॥

'नाहं' अहंप्रत्ययगम्यः प्रथमपुरुषत्वेन प्रसिद्ध आत्मा पुद्गलभावानां कर्मादिभिन्नभिन्नजातीय-पौद्गलिकसृष्टेः सर्जनात्मकजन्मादिकसुखदुःखादि--दृश्यमानाविर्भावपरिणाम—विचित्रदशादि--व्यङ्ग्यविषभावानां स्वातन्त्र्यरूपकर्तृत्वलक्षणरहितत्वेन 'नाहं कर्त्ता, 'नाहं कारयिताऽपि च' न अहमात्मा, कुर्वन्तं प्रयुङ्क्ते इति कारयामीति कारयिता, अर्थात् पुद्गलभावान् कुर्वन्तमन्यं न प्रयुङ्क्ते प्रेरयामि-प्रयोजयामीति कारयिता-प्रेरकः प्रयोजको वेति नाहं पुद्गलभावानामनुमन्ताऽपि च=अहमात्मा, पुद्गलसुन्दरपरिणामभावान् कुर्वन्तमन्यं नाऽनुमन्ये-अनुमोदकः-प्रशंसकः-उत्तेजकःसहायको न भवामीत्यात्मकात्मविषयक-भेदकज्ञानवान्=

॥१०७॥

पुद्गलगुणस्वरूपत आत्मगुणस्वरूपं भिन्नं इति सर्वथा भेदविषयकात्मज्ञानवान् कथं लिप्यते ? अपितु कदा चिदात्मज्ञानी श्रमणो न लिप्यते ॥३६॥

पुद्गलैः को लिप्यते को न लिप्यते इति भेददर्शनम्–

लिप्यते पुद्गलस्कन्धो, न लिप्ये पुद्गलैरहम् ।
चित्रव्योमाऽञ्जनेनेव, ध्यायन्निति न लिप्यते ॥३७॥

'पुद्गलैःपुद्गलस्कन्धो लिप्यते'=पुद्गलसमुदायः पुद्गलैः अन्यपुद्गलसमुदायैः बध्यते नाहमात्मा लिप्ये इति वास्तविकचिन्तनद्वारा पुद्गला मम गुणकारकाः, पुद्गलैरहमातृप्तो भवामीत्याकारकभ्रमात्मकाज्ञानतमः प्रबलं प्रणश्यति, किञ्चात्मना सह रागादिना पुद्गल-सम्बन्धो न तादात्म्यात्मकः परन्तु क्षीरनीरवत् संयोगाख्यः सम्बन्धः (द्रव्ययोःसंयोग इति न्यायेन) अत आत्मनो गुण-स्वभावधर्माःसर्वात्मना पुद्गलतो भिन्नाः पुद्गलस्य गुणधर्माः सर्वथाऽऽत्मद्रव्यतो भिन्नास्ततस्तादृूप्यं द्वयो र्न शक्यते, पुद्गलात्मभेदज्ञानपरिपाकेन, चित्रं=विविधकृत्रिमरङ्गाकारभेदभिन्नं, 'व्योम'='आकाशं'अञ्जनेन'-कज्जलेन, यथा न लिप्यते, तथा पुद्गलैः सहात्मनो लेपोऽसम्भवीति ध्यानं-एकाग्रतापूर्वकचित्तस्थज्ञानं कुर्वन् कोऽप्यात्मा न लिप्यते इति ॥३७॥

निर्लेपज्ञानमग्नस्य क्रिया सर्वोपयोगिनी–

॥१०८॥

लिप्तता-ज्ञानसम्पात-प्रतिघाताय केवलम् ।
निर्लेपज्ञानमग्नस्य, क्रिया सर्वोपयुज्यते ॥३८॥

विषमविषय-निष्करुणकषायादि-प्रमाद-प्रपातपारतन्त्र्यप्रयुक्त-लिप्तताज्ञानरूपः कर्मजन्यभावगत-मोहाधीनदशात्मकज्ञानरूपः, अहं'सर्वदा मोहकर्मादिना लिप्तोऽस्मी'त्याकारकज्ञानरूपो यः 'सम्पातः'सम्यक् पतनमधःपतनं, तस्य प्रतिघाताय-सर्वथाऽभिमुखताहननाय-पुनःपुनर्मार्गणाय-निवारणाय 'केवलम्'-लिप्तता-ज्ञानसम्पातप्रतिघातायैव नान्यस्मै हेतवे इत्यर्थः, 'निर्लेपज्ञानमग्नस्य क्रिया सर्वोपयुज्यते' अनुपयोग-तोऽकस्मात्प्रमादपातेऽतिचारदोषभङ्गाय ।

आवश्यकादिप्रतिक्रमणप्रतिलेखनादिरूपा समुचिता, सर्वा क्रियोपयुज्यतेऽर्थान्निर्लेपज्ञानमग्नस्याव-श्यकादिक्रियाद्वाराऽकस्मादुपस्थित-लिप्तताज्ञानसम्पातप्रतिघात एव भवति, नान्यस्य, यो निर्लेपज्ञाने (अहमात्मा निर्लेपोऽस्मी ति ज्ञाने) मग्नो नास्ति, तस्य आध्यात्मिकज्ञानशून्यस्य आवश्यकादिसर्वक्रिया, लिप्तताज्ञानसम्पातप्रतिघाताय नोपयुज्यते ।

निर्लेपज्ञानमग्नस्यैवावश्यकादिसर्वक्रिया, लिप्तताज्ञानसम्पातप्रतिघातरूपकार्यं प्रति कारणं भवति, अत्र निर्लेपज्ञानमग्नताप्रधानकारणसहकृतावश्यकादिसर्वक्रियैव, लिप्तताज्ञानसम्पात-प्रतिघातकार्यं जनयत्येव नान्यथेति ॥३८॥

**भावनाज्ञानसम्पन्नो निष्क्रियोऽपि न बध्यते—**

तपः—श्रुतादिना मत्तः, क्रियावानपि लिप्यते ।
भावनाज्ञानसम्पन्नो, निष्क्रियोऽपि न लिप्यते ॥३९॥

'तपःश्रुतादिना मत्तः 'अहं महातपस्वी बहुश्रुतोऽहं इत्यादिमदाष्टकेन, मत्तः-अभिमानगजग्राहग्रस्तः सन्, मानादिकषायभञ्जनसमर्थामावश्यकप्रतिलेखनादि-सर्वक्रियां कुर्वन्नपि कर्मादिभिर्लिप्यते एकतः क्रिया क्रियते, एकतोऽभिमानः क्रियने, ततः क्रियातोऽभिमानोऽतिशेते यतो लेपः कर्मणो जायते.

कथं निर्लेप आत्मा भवेदिति प्रश्ने कथ्यते आवश्यकादिक्रियाविरहितो न लिप्यते, क इति प्रश्ने, 'भावनाज्ञानसम्पन्नः' इति प्रत्युत्तरयति, अर्थात् श्रुतज्ञानचिन्ताज्ञानानन्तरं जायमानं अप्रमत्तदशायां भावनाज्ञानमस्ति, यत्र ध्यानेन ध्यातृध्येययोरभेदः क्रियते, त्रितयाभेदानन्दोऽनिर्वचनीयोऽस्ति, स्वल्पकालीनभावनाज्ञानजन्याभेदाद्भुतमहानन्दसमवधानकाले, बाह्यावश्यकादिक्रियाविरहेऽपि कर्मभि र्न लिप्यते महात्मेति,(प्रथमाऽपिना मदाभावे भावनाज्ञान-सम्पत्तौ क्रियावानपि न लिप्यते द्वितीयाऽपिना मदसत्तायां भावनाज्ञानाभावे निष्क्रियोऽपि लिप्यत एव ॥३९॥

**आत्मगतसमलत्वनिर्मलत्वरूपं द्वैतं यदा गतं तदा किं ?—**

समलं निर्मलं चेद-मिति द्वैतं यदा गतम् ।
अद्वैतं निर्मलं ब्रह्म, तदैकमवशिष्यते ॥४०॥

'यदा चेदं समलं निर्मलं द्वैतं गतम्'=इदं ब्रह्मायमात्मा, 'समलं'=अनादितः प्रवाहतो यथायोग्यं ज्ञानावरणीयादि-कर्मतः खनिस्थममलसुवर्णवद् समलं क्षायोपशमादिभावतः चैतन्यादिभावतो निर्मलं, अथवा संग्रहनयाद्यपेक्षया मध्यस्थाष्टरुचकप्रदेशतःसर्वदा सर्वथा निर्मलं-अपेक्षया समलत्वसहितनिर्मलमत एव समलं निर्मलं द्वैतं-द्वित्वभावः भेदबुद्धि (द्विधा इतं द्वीतं तस्य भावो द्वैतं) यदा-भावनाज्ञानान्वितानुभव-ज्ञानेन यस्मिन् काले गतं-ब्रह्मतो निर्गतं समाधितोऽभेदरूपसमापत्तिद्वारा, 'तदाऽद्वैतं निर्मलं ब्रह्मैकमव-शिष्यते' यत्कालावच्छेदेन समलनिर्मलभेदभावरूपं द्वैतं विनष्टं ब्रह्मणि, तदा-तत्कालावच्छेदेन पूर्णाप्रमत्त-दशायामेकं -एकत्वावच्छिन्नं, अद्वैतं द्वन्द्वातीतं द्वित्वाभावापूर्वमद्भुतं निर्मलं-मलमात्राभाववत् , ब्रह्मैकम-वशिष्टं भवति ॥४०॥

अत्र ब्रह्म किंरूपमस्ति ? तत्र का मज्जन्ति ? —

महासामान्यरूपेऽस्मिन्, मज्जन्ति नयजा भिदाः ।
समुद्र इव कल्लोलाः, पवनोन्माथ-निर्मिताः ॥४१॥

॥१११॥

षड्द्रव्यैकात्म्यसंस्पर्शि, सत्सामान्यं हि यद्यपि ।
परस्याऽनुपयोगित्वात्, स्वविश्रान्तं तथापि तत् ॥४२॥

'अस्मिन् महासामान्ये'संग्रहनयार्पणादेकस्मिन् सत्तालक्षणे महासामान्ये ब्रह्मणि (आत्मनि) विश्वमेकं सदविशेषात्, सत्त्वरूपपरसामान्येन विश्वस्यैकत्वं गृह्यते इति 'मज्जन्ति नयजा भिदाः='विकल्परूपनयमात्रेण जाताःकृता वा भेदाः, एकत्वादिधर्मादिरूपा अभिप्राय-विकल्पविशेषाःसर्वे, मज्जन्ति तदेकीभवन्ति समाविशन्ति-विलीयन्ते, ब्रह्ममया भवन्ति, यथा 'समुद्रे'-जलधौ,'पवनोन्माथनिर्मिताः'पवनेन-प्रभञ्जनेन, उन्माथ-मुन्मथनं कृत्वा, निर्मिताः-निर्माणविपयीकृताःकल्लोलाः-उच्छलन्महोर्मयो मज्जन्ति-प्रविशन्ति, तथाऽत्रापि विज्ञेयम्, 'षड्द्रव्यैकात्म्य--संस्पर्शि सत्सामान्यं हि यद्यपि'--धर्माधर्माकाशकालपुद्गलजीवात्मकानि षड्द्रव्याणि जैनशासने सन्ति, 'षड्द्रव्याणि एकत्वात्मकानि सत्सामान्य-सत्ताव्याप्यद्रव्यत्वाविशेषात् अर्थात् षड्द्रव्यैकात्म्यं-षड्द्रव्यैकत्वं सत्ताव्याप्यद्रव्यत्वसामान्यं संस्पृशत्येव सत्सामान्ये-सत्तायां यद्यपि षड्द्रव्यनिष्ठैकरूपत्वसंस्पर्शकारकत्वमस्ति तथापि परस्मिन्-व्यवहारेऽनुपयोगित्वात् 'विशेषा उपयोगिनो व्यवहारे सामान्यमनुपयोगी'तिवचनाद् गामानयेत्युक्ते गोत्वसामान्यं नानयति गोविशेषमेवाऽनयतीति विशेषाणामुपयोगित्वं वर्त्तते तथापि तत्-सत्सामान्यं-सत्त्वं स्वविश्रान्तं स्वत एव स्वस्मिन्-ब्रह्मणि एव विश्रान्तं-विश्रान्तिभाग् भवतीति ॥४१॥४२॥

ब्रह्मणो विशिष्टाऽवस्था का ?—

नयेन सङ्ग्रहेणैव-मृजुसूत्रोपजीविना ।
सच्चिदानन्दरूपत्वं, ब्रह्मणो व्यवतिष्ठते ॥४३॥

'एव' मिति-स्वविश्रान्तसत्तारूपमहासामान्येनाद्वैत-तत्त्वे सिद्धे सति 'ऋजुसूत्रोपजीविना'=ऋजुसूत्रमते, भावत्वं वर्त्तमानत्वसत्ताव्याप्यमिति नियमो वर्त्ततेऽतः सत्ताव्याप्यभावत्वेन, सत्ता तु व्यापिका, भावत्वं तु व्याप्यं वर्त्तते ऋजुसूत्राभिमतसत्ताऽऽश्रितः संग्रहनयोऽस्ति, ततः कथ्यते 'ऋजुसूत्रोपजीविना संग्रहेण नयेनैवम्'=भूतानागतकालस्या-स्वीकारेण चोपयोगित्वापेक्षया, स्व-वर्त्तमानदेशकालयोरेव सत्ता-विश्रामः, वर्त्तमानकालीनं वस्तु, यच्च तस्यात्मीयं रूपं तदेतदुभयमेवाऽस्य नयस्य ऋजुसूत्रस्याभिमतमिति ऋजुसूत्राश्रितेन-ऋजुसूत्रेण जीवनवता संग्रहेण नयेनैवं 'सच्चिदानन्दरूपत्वं ब्रह्मणो व्यवतिष्ठते' सत्त्वविशिष्टं चित्त्वं चित्त्वविशिष्टमानन्दत्वमतः सच्चिदानन्दरूपत्वं, ब्रह्मण आत्मनो व्यवस्थितं-विशेषेणाऽवस्थितं वर्त्तते इति ॥४३॥

सच्चिदानन्दरूपत्वरूपोऽर्थो ब्रह्मणोऽबाधित एव—

सत्त्वचित्त्वादि-धर्म्माणां, भेदाऽभेद-विचारणे ।
न चाऽर्थोऽयं विशीर्येत, निर्विकल्पप्रसिद्धितः ॥४४॥

॥११३॥

ब्रह्मनिष्ठानां सत्त्वचित्त्वानंदत्वादिधर्माणां ब्रह्मतः, व्यवहारनिश्चयादिरूपसविकल्पनयैर्भेदस्य चाभेदस्य च विचारणे-स्वस्वदृष्टिकोणेन-मापेसति सच्चिदानंदरूपत्वविशिष्टसत्तारूपार्थो ब्रह्मणो न विशीर्येत-बाध्येत-अवाधित एव कुत इति चेदुच्यते 'निर्विकल्पप्रसिद्धितः'=सत्ताया निर्विकल्पत्वेन प्रसिद्धिः सर्वदर्शनेषु वर्त्तते, अतो नयविकल्पजन्यभेदाभेदातीता सा सत्त्वचित्त्वानन्दत्वादिधर्मविशिष्टसच्चिदानन्दरूपस्वरूपसत्ता, स्वतंत्राऽजन्याऽजेया ब्रह्मणो वर्त्तते इति ॥४४॥

अतीन्द्रिये निर्विकल्पके सन्मात्रे विकल्पौघाऽसहिष्णुत्वं भूषणमेव—

योगजाऽनुभवारूढे, सन्मात्रे निर्विकल्पके ।
विकल्पौघाऽसहिष्णुत्वं, भूषणं न तु दूषणम् ॥४५॥

'योगजाऽनुभवारूढे'=योगाभ्याम-जनितो (युक्तस्य तावद्योगजधर्म-सहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति) योऽनुभवः-प्रातिभज्ञानापरपर्यायरूपः, तमारूढे-अध्यासिते-चटिते, सम्प्राप्ते सन्मात्रे-सर्वथाऽसद्व्यावृत्ते सदेव-सन्मात्रे सर्वथा सत्स्वरूपे निर्विकल्पके-विकल्पमात्रशून्ये-नयादिकृतविकल्पानामत्यन्ताभावरूपे ब्रह्मणि, 'विकल्पौघासहिष्णुत्वं भूषणं न तु दूषणम्'=तर्कभ्रान्ति-भेदादिरूपविकल्पानां य-ओघः समूहः (प्रवाहः परम्परा) तं न सहते इत्येवं शीलः=विकल्पौघासहिष्णुः, तस्य भावः=विकल्पौघासहिष्णुत्वं=नयादिकृतविकल्पासहनता भूषणं=अलङ्काररूपं न दूषणं=

सुतरां दोषामात्र एव, किमपिजातीयविकल्प-मनःकर्ममात्रातीते योगजन्यानुभवसिंहासनासीने सन्मात्रे ब्रह्मणि-आत्मनि सदा निष्ठा कार्येति ॥४५॥

माधुर्यविशेषवत्सोऽर्थः, अकथ्योऽत्याज्यो वर्त्तते —

यो ह्यख्यातुमशक्योऽपि, प्रत्याख्यातुं न शक्यते ।
प्राज्ञै र्न दूषणीयोऽर्थः, स माधुर्यविशेषवत् ॥४६॥

हि-खलु योऽर्थः=विकल्पप्रवाहासहिष्णुयोगजानुभवारूढ-सच्चिदानन्द-रूपो ब्रह्मणोऽर्थः, प्राज्ञैः-प्रकृष्टज्ञानिभिराख्यातु-कथयितुं न शक्यते, प्रत्याख्यातुं-त्यक्तुं-न शक्यते दूषयितुं न योग्यः-न दूषणीयोऽस्ति स क इवाकथ्योऽत्याज्योऽदूषणीयोऽस्तीति ? चेदुच्यते स 'माधुर्यविशेषवत्'=माधुर्यविशेषो यथा वाचा न चोच्यते मनसा न त्यज्यते न केनापि दूष्यते तथा सोऽर्थः सुधातिशायिजगदद्भुतालौकिकमधुरातिमधुरो वाचाऽवाच्योऽस्ति· मनसा न त्याज्योऽस्ति न केनाऽपि वस्तुना दूषणयोग्योऽस्ति परन्तु योगजपरमानुभवज्ञानाऽऽस्वादयोग्योऽस्तीति ॥४६॥

योगिनां ज्ञानजं सुखं लोको न वेत्ति—

कुमारी न यथा वेत्ति, सुखं दयितभोगजम् ।
न जानाति तथा लोको, योगिनां ज्ञानजं सुखम् ॥४७॥

यथा कुमारी-अविवाहिता बालिका, दयितभोगजं सुखं-परिणीतप्रियतमेन सह भोगसम्बन्धजन्यं सुखमानन्दं न वेत्ति-जानाति तथा योगिनां-परमज्ञानयोगिनां योगजानुभव-ज्ञानजन्यं तात्त्विकं स्ववशत्वात् परनिरपेक्षत्वात् सुखं-परमानन्दं लोको-ज्ञानयोग-शून्यत्वेन सामान्यलोको न जानाति-न ज्ञानपथं प्रापयतीत्यर्थः ॥४७॥

निर्विकल्पकसमाधेरुपदेशस्य कोऽधिकारी ?—

अत्यन्त-पक्वबोधाय, समाधिर्निर्विकल्पकः ।
वाच्योऽयं नार्धविज्ञस्य, तथा चोक्तं परैरपि ॥४८॥

अष्टमादिरूपाप्रमत्तगुणस्थानके जायमानशुद्धः-(निरालम्बनः-आत्ममात्रालम्बनः)उपयोगरूपनिर्विकल्पकसमाधिः, 'अत्यन्त-पक्वबोधाय' सर्वथा परिपाकप्राप्तज्ञानयोगतत्पात्रभूताय महात्मने, 'वाच्यः' निर्विकल्पसमाधेरुपदेशो वाच्यो-दातव्यः, अयं नार्धविज्ञस्य, पूर्णपरिपक्वज्ञानादर्धज्ञानवतोऽर्थात् ज्ञानलवदुर्विदग्धस्यायं-निर्विकल्पकसमाधिर्न वाच्यः, अनधिकारिणोऽर्धज्ञानदग्धस्य निर्विकल्पकसमाधेरुपदेशो न देय इति । 'तथा चोक्तं परैरपि,' तीर्थान्तरीयैरपि तथा च कथितं वक्ष्यमाणमनन्तरं तत्, श्रोतव्यम् ॥४८॥

आदौ शमदमप्रायै-र्गुणैः शिष्यं प्रबोधयेत् ।
पश्चात्सर्वमिदं ब्रह्म, शुद्धस्त्वमिति बोधयेत् ॥४९॥

प्रतिबोधप्रणालिका=आदौ=योगशिक्षाप्रारम्भे शिष्यं–शासनयोग्यमुपदेशयोग्यं शमः–विषयकषायोपशान्ति, दमः–इन्द्रियार्थप्रत्याहारादिः, तत्तुल्यैः गुणैः–शमदमादिगुणद्वारा (प्रतिबोध)–उपदेशविषयं कुर्यात्–अर्थात् गुणोपदेशद्वारा शमदमादिगुणशालिनं शिष्यं कुर्यादिति । 'पश्चात्सर्वमिदं ब्रह्म' गुणोपदेशे सगुणान्वितशिष्यस्य करणानन्तरमिदं–प्रत्यक्षोपलभ्यमानं सर्वं जगद् ब्रह्म, त्वं शुद्धोऽसीति बोधयेदुपदिशेदिति ॥४९॥

आदित एवाज्ञस्यार्धविदग्धस्य सर्वं ब्रह्मेति कथं न वदेत् ?

अज्ञस्यार्धप्रबुद्धस्य, सर्वं ब्रह्मेति यो वदेत् ।
महानरकजालेषु, स तेन विनियोजितः ॥५०॥

सर्वथा ज्ञानयोगरहितस्य, पूर्णज्ञानयोगाद् वा पूर्णयोगज्ञानादर्धप्रबोधप्रज्ञानसंयुक्तस्य यः 'सर्वं ब्रह्मे'ति वदेदुपदिशेद्, तेनोपदेशकेनाज्ञश्चार्धप्रबुद्धश्च सोऽज्ञश्चार्धविदग्धश्चोभयात्मक उपदेश्यः शिष्यश्च 'महानरकजालेषु' घोरातिघोरेषु सप्तसु महानरकेषु विनियोजितः–स्थापितः–पातितः प्रक्षिप्त इति यावत्, सप्तनरकपातनजन्यं महापापं प्रतिबोधस्य यथायोग्यक्रमिकप्रणालिकामजानानस्य शिरस्यागतं वर्त्तते उपदेशकेन क्रमिकप्रणालिका प्रतिबोधस्यावगन्तव्येति ॥५०॥

प्रथमतोऽव्रतादिजनकासद्विकल्पेनाशुद्धं चित्तं शुद्धं कुर्यात्—

तेनादौ शोधयेच्चित्तं, सद्विकल्पैर्व्रतादिभिः ।
यत्कामादिविकाराणां, प्रतिसङ्ख्यान-नाश्यता ॥५१॥

शुभालम्बनान्यपेक्ष्य शुभोपयोगादिरूपसद्विकल्पैः-शुभविचारमयैः श्राद्धव्रत-श्रमणव्रतभेदैः तेनादौ शोधयेच्चित्तं=तेन पूर्वोक्तेन कारणेन चित्तमन्तः करणं प्रथमतः शोधयेत्, धर्मादियोगारम्भकाले-चित्तशुद्धये पूर्वमन्तःकरणान्तःप्रविष्टानशुभोपयोगरूपान-सदुविकल्पान् निष्काशयितुं सद्विकल्पद्वारा जन्यव्रतादिप्रवेशेन चित्तं शुद्धं-निर्मलं कुर्यात् , 'यत्कामादिविकाराणां प्रतिसङ्ख्याननाश्यता'=यद्-यतः कामादिरूपभावविकाराणां प्रतिपक्षभूतविज्ञानभावनासेवनादिरूपप्रतिसंख्यानेन नाशयोग्यता भवति अर्थात् काममिथ्यात्व-कशयहास्यादिनिद्रार्त्तरौद्राऽसंयम--चक्षुर्दर्शनावरणासातरागद्वेषसहितमोहप्रमादादिविकाराणां प्रतिपक्षभूतविशुद्धविशिष्टशीलरूपब्रह्मचर्यसम्यग्दर्शनप्रशमादिवैराग्यश्रुतोपयोगोद्योगधर्म्यशुक्लध्यानेन्द्रिया--दिनिग्रहात्मकसंयमतत्तत्क्षयोपशमादिभाव--महापुण्योदयरागद्वेषसहित-मोहाभावाऽप्रमादरूप-प्रतिसंख्यानेन विध्वंस--योग्यता भवतीति ।

('वञ्चनं करणानां तद्विरक्तः कर्त्तुमर्हति सद्भावविनियोगेन सदा स्वाऽन्यविभागवित्' ज्ञानविचाराभिमुखं यथा यथा भवति किमपि सानन्दं (सदालम्बनैः) अर्थैःप्रलोभ्य बाह्यैरनुगृह्णीया (निगृह्णीया) त्तथा तद् "भिन्नास्ते ह्यात्मनोऽत्यन्तं तदैर्तैः (द्रव्यप्राणैः) नास्ति जीवनम् । ज्ञानवीर्यसदाश्वास-नित्यस्थितिविकारिभिः" ।

एतत्प्रकृतिभिः शाश्वतीभिस्तु शक्तिभिः । जीवस्यात्मा सदैन्येपाशुद्धद्रव्यनयस्थितिः । इत्यप्यत्र विचारणीयमिति) ॥५१॥

**विकल्परूपेयं माया विकल्पान्तरेणैव नाश्या—**

**विकल्परूपा मायेयं, विकल्पेनैव नाश्यते ।**
**अवस्थान्तरभेदेन, तथा चोक्तं परैरपि ॥५२॥**

इयं-अशुभालम्बनगताशुभोपयोगरूपासत्सङ्कल्पाऽभिन्ना, मिथ्यात्वाविरत्यज्ञानावस्थान्तरभेदभिन्ना, सांसारिकविकल्परूपा, माया-मायेव माया महेन्द्रजालसदृशी (मायामयं विश्वं मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्) विकल्पेतरा-नाशेन शुभालम्बनमापेक्षशुभोपयोगरूपसत्सङ्कल्पसुगर्भितसम्यग्दर्शनज्ञानाणुव्रतमहाव्रताद्यवस्थान्तरभेदभिन्नेन प्रमत्तादिगुणस्थानस्थितेन व्यवहारनयस्थितेन विकल्पेनैव नाश्यते-विनाशविषयीक्रियते (प्रथमतो व्यवहारनयस्थितोऽशुभविकल्पनिवृत्तिपरो भवेत् शुभविकल्पमयव्रतसेवया, हरति कण्टक एव हि कण्टकम् , 'भवति देशनिवृत्तिरपि स्फुटा, गुणकरी प्रथमं मनस्तथा' सेयं नटकला तावद् , यावद् विविधकल्पना, तद्रूपं कल्पनाऽतीतं तत्तु पश्यत्यकल्पकः कल्पनामोहितो जन्तुः शुक्लं कृष्णं च पश्यति, तस्यां पुनर्विलीनायामशुक्लाकृष्णमीक्षते.) ॥५२॥

**'तथा चोक्तं परैरपि'=तीर्थान्तरीयैरप्येवमेव चोक्तमस्ति तथाहि=(योगवाशिष्ठे)—**

अविद्ययैवोत्तमया, स्वात्मनाशोद्यमोत्थया ।
विद्या सम्प्राप्यते राम !, सर्व-दोषाऽपहारिणी ॥५३॥

'स्वात्मनाशोद्यमोत्थया=अच्छेद्याभेद्यत्वादिविशिष्टस्वस्यात्मनो नाशायोद्यमेन उत्थया-जातया उत्तमया-स्वात्माऽनाश्योऽस्ति तस्य नाशः कथमिति चिन्ताजन्ययाऽत उत्तमया प्रशस्ताऽविद्ययैव, हे राम ! भगवन् ! सर्वेऽज्ञानजन्या ये दोषास्तेषामपहारिणी विद्या-नित्यशुच्यात्मनि, नित्यशुच्यात्मत्वबुद्धिरूपा विद्या-सम्यग्ज्ञानं सम्प्राप्यते-सम्यक्तया प्राप्यते ॥५३॥

— विषं विषेण शममुपैति तथा विकल्पेनैव विकल्पः —

शाम्यति ह्यस्त्रमस्त्रेण, मलेन क्षाल्यते मलः ।
शमं विषं विषेणैति, रिपुणा हन्यते रिपुः ॥५४॥
ईदृशीभूतमायेयं, या स्वनाशेन हर्षद ! ।
न लक्ष्यते स्वभावोऽस्याः, प्रेक्ष्यमाणैव नश्यति ॥५५॥

हीति खलु 'अस्त्रेणाऽस्त्रं शाम्यति' अस्त्रविद्यविशारदप्रगुणीकृतगुणविशिष्टास्त्रेणास्त्रस्य भयं शाम्यति, लोहो लोहं कर्त्तयतीतिवत्; मलेन क्षाल्यते मलः=सर्वक्षारशंखपुष्पीशाल्मलीककन्दकटुका

नागदमनीवनस्पत्यादिविधिकृतचूर्णजनितकल्कपङ्करूपमलेन शरीरादिगतमलः चाल्यतेऽथवाऽद्यतनीयमूत्रप्रयोगेणोदरादिगतमलशुद्धिर्भवति, 'शमं विषेणेति'=आयुर्वेदशास्त्रोक्तविधिना कृतविषमयौषधरूपविषेण विषं शमं शान्तिमेति प्राप्नोति; रिपुणा हन्यते रिपुः=बलवता रिपुणा निर्बलो रिपुर्हन्यते इति ।

'तस्याशु नाशमुपयाति भयं भियेव, यस्तावकं स्तवमिमं मतिमानधीते' (भक्ता, स्तो.) 'ईदृशीभूतमायेयं' महेन्द्रजालवत् प्रदर्शनाऽनन्तरमसद्विकल्पजन्याविद्याऽऽलम्बनमायात्वाऽवच्छिन्नमायेव माया-(प्रकृति) या स्वात्मविद्यामायया नाशेन (स्वमायानाशेन) हे दर्पद ! व्यक्तिशेष ! राजविशेष ! अस्याः मायाया स्वभावः स्वरूपं न लक्ष्यते-न लक्षविषयीक्रियतेऽतः सद्दृष्ट्या प्रेक्ष्यमाणैव-प्रेक्षणविषयीक्रियमाणैव नश्यति नाशमुपयातीति ॥५४॥५५॥

शुभसङ्कल्पः कथं भविष्यत्काले विनश्यति ?—

व्रतादिःशुभसङ्कल्पो, निर्णाश्याशुभवासनाम् ।
दाह्यं विनैव दहनः, स्वयमेव विनङ्क्ष्यति ॥५६॥

'निर्णाश्याशुभवासनाम्'=अशुभा या वासना-अशुभालम्बनप्रयुक्ताऽतीतकालीनाशुभपदार्थस्मरणोत्पत्त्यनुकूलस्मृतिपरिणामि-कारणभूतसंस्कारवासनाऽस्ति तां वासनां निर्णाश्य-नितरां नाशयित्वा, व्रतादिः-अणुव्रतमहाव्रतादिः यः प्रमत्तादिगुणस्थानस्थितः, शुभालम्बनजन्यशुभोपयोगरूपशुभसङ्कल्पोऽनन्तरं

॥१२१॥

भविष्यत्काले स्वयमेव परकारण-निरपेक्षं सद् विनङ्क्ष्यति-विनाशं प्राप्स्यति, यथा दाह्ययोग्यदाह्यवस्तु विना, दहनोऽग्निः स्वयमेव विध्यातो भवति-शान्तो भवति तथाऽत्रापि ज्ञेयम् ॥५६॥

नैश्चयिकी शक्ति योगिनां किमर्थमुपयुज्यते ?—

इयं नैश्चयिकी शक्ति-र्न प्रवृत्ति र्न वा क्रिया ।
शुभसङ्कल्पनाशार्थं, योगिनामुपयुज्यते ॥५७॥

'इयं नाश्याभाव-प्रयुक्ता, अष्टमाद्यप्रमत्तगुणस्थानीयाध्यवसायात्मिका 'नैश्चयिकी शक्तिः' विशिष्ट-निश्चयरूपाऽथवा निश्चयनयसम्मता, व्रतादिनिष्ठप्रवृत्ति-क्रिया-शून्या शक्तिः-आत्मनिष्ठसामर्थ्ययोगरूपा शक्तिः, 'योगिनां'—सामर्थ्ययोगप्रविष्टानां योगिनां व्रतादिविषयकशुभसङ्कल्पस्य नाशायोपयुज्यत उपयुक्ता भवति ॥५७॥

क्षायोपशमिका धर्माःकदा यास्यन्ति के च स्थास्यन्ति ?—

द्वितीयापूर्वकरणे, क्षायोपशमिका गुणाः ।
क्षमाद्या अपि यास्यन्ति, स्थास्यन्ति क्षायिकाःपरम् ॥५८॥

अष्टमगुणस्थानकादौ 'द्वितीये' अस्मिंस्तु तथाविधकर्मस्थितेस्तथाविध-संख्येयसागरोपमातिक्रम-

॥१२२॥

भाविनि द्वितीयेऽपूर्वकरणे-अपूर्व-शुद्धपरिणामे सामर्थ्ययोगे प्रथमो धर्मसंन्या स संज्ञितः सामर्थ्ययोगःपारमार्थिको भवेत्-क्षपकश्रेणि-योगिनः क्षायोपशमिकाः क्षमाद्या धर्मा निवृत्ताः परं क्षायिकाः स्थास्यन्ति, अर्थात् तथाविधकर्मक्षयेण निवृत्ताः क्षायिका ज्ञानदर्शनाद्या गुणा-धर्माः स्थास्यन्ति-स्थिरा भविष्यन्ति । यावत् क्षायिकगुणप्राप्तिर्न भवेत्तावत् क्षायोपशमिका धर्मा आवश्यकास्त्यक्त्वौदयिकभावान् अधर्मांश्च यतः क्षायिकगुणा आत्मनो मौलिकशुद्धस्वरूपाणि । औदयिकधर्माभावरूप-पृथ्वीतलात् क्षायिकभावरूपोपरिभूमिकायां-मालके गन्तुं क्षायोपशमिकभावाः निःश्रेणीकल्पाः ।

('ध्रुवैकरूपान् शीलादिबन्धूनित्यधुना श्रये' 'बाह्यवर्गमिति त्यक्त्वा धर्मसंन्यासवान भवेत्' 'धर्मास्त्याज्याः सुसंगोत्थाः क्षायोपशमिका अपि प्राप्य चन्दनगन्धाभं धर्मसंन्यासमुत्तमम्' 'निर्विकल्पके पुनस्त्यागे न विकल्पो न वा क्रिया' इति श्लोका अप्यत्र स्मरणीया विचारणीयाश्चेति) ॥५८॥

किं कुर्वन् कुत्र पक्षपाती योगी दीप्तिमुपैति ?—

इत्थं यथा बलमनुद्यममुद्यमं च, कुर्वन् दशानुगुणमुत्तममान्तरार्थे ।
चिन्मात्रनिर्भरनिवेशित-पक्षपातः, पात्यं रत्नमिव दीप्तिमुपैति योगी ॥५९॥

इत्थमेवं आन्तरार्थे (अन्तर्मध्ये भवःआन्) आन्तरश्चासावर्थश्च तस्मिन्, आत्मान्तरिकसच्चिदानन्द-रूप मुक्तिकृते 'दशानुगुणं' यादृशी गुणस्थानकापेक्षया दशा तादृग्दशाया अनुगुणं (अनुरूपं-अनुकूलं) यथा

बलं-यथाशक्ति,'अनुद्यममुद्यममुत्तमं कुर्वन्' यथा पूर्वोक्ताष्टमादिगुणस्थानकदशास्थितः क्षायिकान्तरगुणार्थकमुत्तममुद्यमं कुर्वन्, क्षायोपशमिकगुणार्थकमनुद्यमं-उद्यमाभावं कुर्वन्-विदधद् योगी, अर्थादप्राप्तगुण प्राप्तये उत्तम उद्यमः कार्यः, प्राप्तगुणप्राप्तयेऽनुद्यम इत्यर्थः एवं 'चिन्मात्रनिर्भर-निवेशित-पक्षपातः'चिदेव-चिन्मात्रं तत्र निर्भरं निवेशितः स्थापितः पक्षपातः-सत्यश्रद्धारागाग्रहो येन सः=चिन्मात्रनिर्भरनिवेशितपक्षपातः 'प्रातर्द्यु रत्नमिव दीप्तिमुपैति योगी' प्रातःकालीन-दिनमणिवत् दीप्तिं—कान्ति प्रभावमुपैति ज्ञानयोगीति ॥५६॥

**शास्त्रयोगी व्यवहारमार्गी, पश्चात् प्रज्ञापनीयःसहजात्मरूपवर्त्ती भवति—**

अभ्यस्य तु प्रविततं व्यवहारमार्गं, प्रज्ञापनीय इह सद्गुरुवाक्य-निष्ठः ।
चिद् दर्पण-प्रतिफलत् त्रिजगद्-विवर्त्ते, वर्तेत किं पुनरसो सहजात्मरूपे ॥६०॥

'अभ्यस्ये' ति 'प्रविततं' प्रकर्षेण विशेषतो कालसंख्याद्यपेक्षया महत्तमं सुविस्तृतं,शास्त्रद्वारा सञ्चालित-जैनशासन-तीर्थाराधनाजनकं शास्त्रयोगरूपं व्यवहारनयदर्शित-व्यवहारमार्गं तु सम्यगभ्यस्य-पुनःपुन जिनाज्ञामात्मसात् कृत्वा, परमज्ञानयोगिरूपसद्गुरुवाक्यनिष्ठावान् , 'प्रज्ञापनीयः' शिष्यदेश्यः—उपदेश्यः, इहास्मिन् , 'चिद्दर्पण-प्रतिफलत् त्रिजगद्विवर्त्ते'=ज्ञानरूप आदर्शे प्रतिफलत्-संक्रामत्-प्रतिबिम्बीभवद् यत् त्रिजगतः-ऊर्ध्वाधोमध्यलोकत्रैलोक्यस्य विवर्त्ताः-द्रव्याणां पर्याया रूपान्तराणि यस्मिंस्तत् , ॥१२४॥

तस्मिन् 'सहजात्मरूपे'-स्वाभाविके आत्मनश्चिद्रूपे रूपे अमौ-प्रज्ञापनीयोऽयं वर्त्तेत-वृत्तिमान् भवेत्, 'किंपुनः' कस्तत्र प्रश्नः ? कोऽप्यत्र न प्रश्नो ऽपितु तत्र प्रज्ञापनीयेन वृत्तिमता भाव्यमेवेति ॥६०॥

अध्यात्मस्फुरितपरमभावेऽस्माकं पक्षपातोऽधिक एव—

भवतु किमपि तत्त्वं बाह्यमाभ्यन्तरं वा, हृदि वितरति साम्यं निर्मलश्चिद्विचारः ।
तदिह निचित-पञ्चाचारसञ्चारचारु-स्फुरित—परमभावे पक्षपातोऽधिको न ॥६१॥

'किमपि तत्त्वं बाह्यमाभ्यन्तरं वा भवतु'=बाह्यं-सेन्द्रियं शरीरादि-तत्त्वं, आभ्यन्तरं-अतीन्द्रियमात्मादिरूपं तत्त्वमर्थात् किमपि तत्त्व भवतु-अस्तु तावत्, परन्तु निर्मलः=शुभोपयोगरूपेणाशुभमलरहितोऽथवा शुद्धो ज्ञानयोगाभिन्नो विचारो-ध्यानविशेषो 'हृदि साम्यं' अन्तःकरणे बाह्याभ्यन्तरतत्त्वरूपपदार्थयोः साम्यं-तुल्यमनोवृत्तिं 'वितरति—ददाति' तस्मादिह-समुदिता येऽध्यात्मविशेषरूपाःपञ्चाचारास्तेषां सञ्चारः-पालनं तत्र चारुस्फुरितः-सुन्दरविकसितो यः परमः-उत्कृष्टो भावोऽध्यवसायविशेषस्तस्मिन=निचितपञ्चाचारचारुस्फुरितपरमभावे, नः=अस्माकमधिकोऽतिशयितः पक्षपातः-एष एव सत्य इति मानसः सद्भावाऽतिरेक इति ॥६१॥

ज्ञानयोगी कुत्र हर्षवान् भवति ?—

स्फुटमपरमभावे नैगमस्तारतम्यम् प्रवदतु न तु हृष्येत्तावता ज्ञानयोगी ।
कलितपरमभावं, चिच्चमत्कारसारं सकलनयविशुद्धं चित्तमेकं प्रमाणम् ॥६२॥

'नैगमः'-नैगमनयोऽनेकधा प्रतिपत्त्रभिप्रायतोऽनेकधा निगमनान्नैगमोऽनेकभेदः-'अपरमभावे'=उत्कृष्टभिन्नमध्यमजघन्याऽध्यवसायरूपे भावे 'तारतम्यं' न्यूनाधिक्यं=तरतमत्वं स्फुटं प्रवदतु' स्पष्टं प्रकर्षेण कथयतु, तावता-तावन्मात्रेण, विशिष्टज्ञानयोगी, न हृष्येत्,-न हर्षवान् भवेत् , 'चिच्चमत्कारसारं'=ज्ञानकृतानामाश्चर्याणां सारं यत्र तत्, 'कलितपरमभावं'=कलितः-संज्ञातः संप्राप्तो वा परमः-उत्कृष्टो भावः-परिणामो येन तत्.'सकलनयविशुद्धं'=सर्वनयपवित्रं, एकमद्वितीयं चित्तमन्तःकरणं विशिष्टचैतन्यं वा प्रमाणं-साक्षिभूतं स्वपरनिर्णायकं ज्ञानं प्रमाणं वेति ॥६२॥

निश्चयो नो बिभेति—

हरिरपरनयानां गर्जितैः कुञ्जराणाम् , सहजविपिन सुप्तो, निश्चयो न बिभेति ।
अपितु भवति लीलोज्जृम्भिजृम्भोन्मुखेऽस्मिन्, गलितमदभरास्ते नोच्छ्वसन्त्येव भीताः॥६३॥

'अपरनयानां कुञ्जराणां गर्जितैः=निश्चयभिन्नानामन्येषां नयानां कुञ्जराणां-गजानामिव गर्जितैः ध्वनितैः,'सहज-विपिनसुप्तो' सहजं स्वरूपं तदेव विपिनमरण्यं तत्र सुप्तः-शयितः निश्चयो-निश्चयात्मको नयो

हरिरिव-वनराजकेसरिसिंह इव नो बिभेति-न भयमुपैति, भयाभावमात्रं नापितु लीलया-क्रीडया (विलासतः) उज्जृम्भि-विकासि (विवृत) जृम्भया—जृम्भणेनोर्द्ध्वं मुखं यस्य स उन्मुखः, तस्मिन्=लीलोज्जृम्भिजृम्भोन्मुखेऽस्मिन् 'भवति'-निश्चयरूपे हरौ सति, ते-कुञ्जराः, भीताः-भययुताः 'गलितमदभराः' गलितः-पतितः मदभरः-दानसमुदायो येषां ते गलितमदभराःसन्तः 'नोच्छ्वसन्ति एव' श्वासोच्छ्वासरहिता एव अर्थाद् मृता एव भवन्तीति ॥६३॥

परमार्थविषयकभावनापावनानां परमस्थितिः—

कलितविविधबाह्यव्यापकोलाहलौघ-व्युपरमपरमार्थे भावनापावनानाम् ।
क्वचन किमपि शोच्यं नास्ति नैवास्ति मोच्यम्,
न च किमपि विधेयं नैव गेयं न देयं ॥६४॥

कलितः सम्प्राप्तः, विविधो-नानाजातीयो निश्चयतो बाह्यरूपव्यवहारस्य व्यापकीभूतानां कोलाहलानां कलकलध्वनीनां, ओघः-प्रवाहःसमुदायो वा तस्य व्युपरमः-विशेषतो विरामो यस्मिन् सः, कलितविविधबाह्यव्यापकोलाहलौघव्युपरमः, स चासौ परमोऽर्थः-निश्चयरूपःपरमोऽर्थस्तस्मिन्नथवा मोक्षपरमार्थे, 'भावनापावनानां' भावनाज्ञानरूपज्ञानयोगेन पवित्राणां मुनीनां, क्वचन-कुत्रचिद् देशे काले वा वस्तुनि न किमपि वस्तु शोच्यं-शोचनीयमालोचनीयमस्ति, नैवाऽस्ति मोच्यं—मोचनीयं—मोक्तव्यमस्ति,न च किमपि विधेयं,

॥१२७॥

नैव गेयं, न देयम्'=किमपि-किञ्चिदपि कर्त्तव्यं नास्ति, नैव गेयं-स्तुत्यं, न देयं=दातव्यमस्तीति ॥६४॥

**परमज्ञानयोगी तीर्थकरो वा गणधरादिर्यति-पति र्भवति--**

इति सुपरिणतात्मख्याति-चातुर्य-केलि-र्भवति यतिपतिर्यश्चिद्भरोद्भासिवीर्यः ।
हर-हिमकरहारस्फार-मन्दार-गंगा-रजतकलशशुभ्रा स्यात्तदीया यशःश्रीः ॥६५॥

'इति'-निश्चयसिद्धपरमार्थे, आत्यन्तिकपरिणतात्मनि ज्ञानविषयक-चतुरतामयकेलिः-क्रीडा यस्य मः-सुपरिणताऽऽत्मख्यातिचातुर्यकेलिः, यः 'चिद्भरोद्भासिवीर्यः'=ज्ञानोत्कर्षोद्भासकवीर्य-परमशक्तिशाली 'यतिपति' स्तीर्थकरो गणधरादि र्वा भवति,तदीया-तस्य तीर्थकरादेरियं तदीया, 'यशःश्रीः'हरस्य-शिवस्य, हिमकरस्य-चद्रस्य, हारस्य-श्वेतहारस्य, मन्दारस्य-कल्पवृक्षस्य, गंगायाः-गगाजलस्य, रजतरूप्यककलशस्य तुल्या शुभ्रा-अवदाता स्यात्-भवेदिति ॥६५॥

इति श्रीपण्डितनयविजयगणिशिष्यपण्डितपद्मविजयगणिसहोदरोपाध्यायश्रीयशोविजगणिविरचितेऽध्यात्मोपनिषत्प्रकरणे ज्ञानयोगनामा द्वितीयोऽधिकारः समाप्तः । इति आचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधरविजय-भुवनतिलकसूरीश्वर-पट्टधर-विजयभद्रकरसूरिणाऽध्यात्मोपनिषत्प्रकरणे रचितायां भुवनतिलकाख्यायां टीकाया ज्ञानयोगनामा द्वितीयोऽधिकारः समाप्तः ।

॥१२८॥

# ॥ अथ तृतीयः क्रियायोगाऽधिकारः ॥

साधकसिद्धयो र्मध्ये साधनलक्षणयो र्भेदाभावः कथं ?—

यान्येव साधनान्यादौ, गृह्णीयाज्ज्ञानसाधकः ।
सिद्धयोगस्य तान्येव, लक्षणानि स्वभावतः ॥१॥

आदौ-पूर्वं यान्येव साधनानि-यान्युपादानभूतसाधनानि एव सत्तपोनियमादीनि, ज्ञानसाधकः-ज्ञानयोगी, गृह्णीयाद्--ग्रहणं कुर्यात्, तान्येव साधनानि स्वभावत एव लक्षणानि-स्वरूपाणि भवन्ति । सिद्धयोगस्य-साधकावस्थायां साधनानि पूर्णतया सातत्येन-साकल्येन सम्यक् साधयित्वा साध्यलक्षण-परिणामरूपाणि, यथा ज्ञानाचारसाधनात्केवलज्ञानरूपलक्षणं,तण्डुलावस्थातः परिपाकानन्तरं भोज्योदनाव स्थावत् , एवं साधकः साधनान्येव सिद्धावस्थायां लक्षणत्वेन परिणमयति-निर्वर्त्तयतीति, अथवा स्वयमेव साधकसाधनाशक्तिमहिम्ना साधनं स्वभावतो लक्षणं-स्वरूपं भवतीति ॥१॥

एतदर्थं सोमिलप्रश्नस्य व्याख्यानम्—

अत एव जगौ यात्रां, सत्तपो-नियमादिषु ।
यतनां सोमिल-प्रश्ने, भगवान् स्वस्य निश्चिताम् ॥२॥

'अतः' साधक--सिद्धभेदेन साधनान्येव लक्षणानि भवन्त्येतस्मात् कारणात् सोमिलब्राह्मण प्रश्नोत्तरे भगवान् महावीरस्वामी भगवत्यां स्वस्यात्मनः' सत्तपो-नियमादिषु निश्चितां यतनां-यात्रां जगौ-कथितवान् तथाहि-'यानं यात्रा-संयमयोगेषु प्रवृत्ति' ःयापनीयं-मोक्षाध्वनि गच्छतां प्रयोजकः इन्द्रियादिवश्यतारूपो धर्मः' सोमिलप्रश्नः='यात्रा ते भदन्त ! यापनीयमव्याबाधं ? सोमिल ! यात्राऽपि मे, यापनीयमपि मे अव्याबाधमपि मे । प्रश्नः-किंते भदन्त ! यात्रा ? सोमिल ! या मे ! तपोनियमसंयमस्वाध्यायध्यानाऽऽवश्यकादिकेषु योगेषु यतना (प्रवृत्तिः) सा यात्रा । इह तपोऽनशनादि-नियमास्तद्विषया अभिग्रहविशेषाः, यथा एतावत्तपःस्वाध्यायवैयावृत्त्यादि, मयाऽवश्यं रात्रिंदिवादौ विधेयमित्यादिरूपाः, संयमः-प्रत्युत्क्षेपणादिः, स्वाध्यायः-धर्मकथादिः, ध्यानं धर्मादि, आवश्यकं षड्विधं, एतेषु च यद्यपि भगवतः किञ्चिन्न तदानीं विशेषतः सम्भवति, तथापि तत्फलसद्भावात्तदस्तीत्यवगन्तव्यमिति. १-प्रतिलेखनादिः । (भग.सू श.-१८, उ-१०) ॥२॥

तदेव दर्शनान्तरीयसाक्षिद्वारा द्रढयति—

अतश्चैव स्थितप्रज्ञ-भावसाधन-लक्षणे ।
अन्यूनाभ्यधिके प्रोक्ते, योगदृष्ट्या परैरपि ॥३॥

अतश्चैव-भगवता महावीरेण भगवत्यां सोमिलप्रश्नोत्तरे ज्ञानाचारादिरूपसाधनं केवलज्ञानादिरूपफलसद्भावो लक्षणत्वेनास्तीत्यस्मात्कारणादेव.

'स्थितप्रज्ञस्य'="प्रजहाति यदा कामान्, सर्वान् पार्थ ! मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः,स्थितप्रज्ञस्तदोच्यते ॥
शान्तो दान्तो भवेदीदृगात्मारामतया स्थितः ।
सिद्धस्य हि स्वभावो यः सैव साधकयोग्यता ॥"इति.भग.गी.

एतादृशस्वरूपसम्पन्नस्य स्थितप्रज्ञस्य यद्भावरूपं 'न तु द्रव्यरूपं 'नित्यं साध्यं साधयत्ये'वेति स्वरूपं साधनासाधनं-ध्यानादि-साधनं, भावरूपं च लक्षणं साध्यरूपं नित्यस्वरूपं केवलज्ञानादिकं अर्थात् 'स्थितप्रज्ञभावलक्षणे सैव साधकयोग्यता-साधकनिष्ठभव्यता, सिद्धस्य नित्यस्वभावो भवति शक्तिफलवत् तत्र न न्यूनाधिक्यभाव-तारतम्यभावो भाव-साधनलक्षणमध्ये चार्थाद् भावसाधनाद् भावलक्षणे न न्यूनत्वं नाधिकत्वमेवं भावलक्षणाद् भावसाधने न न्यूनत्वं नाधिकत्वमस्ति साधनलक्षणव्यापियोग्यताशक्तिमहिमा सर्वत्र समानो दृश्यत इति परैरपि-दर्शनान्तरीयैरपि योगदृष्ट्याऽथवा योगदृष्टिग्रन्थे प्रोक्ते स्त इति ॥३॥

॥१३१॥

ज्ञानवतो निरपेक्षयथेच्छाचरणे को दोषः ?—

नाऽज्ञानिनो विशेष्येत, यथेच्छाऽऽचरणे पुनः ।
ज्ञानी स्वलक्षणाभावात्, तथा चोक्तं परैरपि ॥४॥

पुनः-किं च ज्ञानिनो यथेच्छाचरणस्वीकारे-कामचारप्रवृत्तिस्वीकारे,'अज्ञानिनो न विशेष्येत' अज्ञानवतः पुरुषाज्ज्ञानी-ज्ञानवान्, न विशिष्टो भवेत्, अज्ञानी च ज्ञानी समानकक्षावन्तौ भवेतां कथमिति चेत् 'ज्ञानी स्वलक्षणाभावाद्' आत्मगतज्ञानलक्षण-फलरूपचारित्राभावात् स्वेच्छाचरणविषये, अज्ञानितो ज्ञानी नातिशेते, अज्ञानितुल्यो ज्ञानी भवति सूर्यस्योदये यथाऽन्धकारो न तिष्ठति, ज्ञानसूर्योदये दुराचरणरूपान्धकारः कथं तिष्ठेदिति ॥४॥

तथा च तीर्थान्तरीयैरुक्तं च स्वशास्त्रे—

बुद्धाद्वैत-सतत्त्वस्य, यथेच्छा-चरणं यदि ।
शुनां तत्त्वदृशां चैव, को भेदोऽशुचिभक्षणे ॥५॥

'बुद्धाद्वैत-सतत्त्वस्य'=बुद्धं-ज्ञातं ब्रह्मरूपाद्वैतसतत्त्वं=परमात्मरूपैकस्वरूपलक्षणं, येन सः, तस्य बुद्धाद्वैत-सतत्त्वस्य पुरुषस्य 'यदि यथेच्छाचरणं' यदि गुरुशास्त्रादिनिरपेक्ष-निरङ्कुशा-ऽविहिताचरणं भवेत्तदा 'शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे'=सारमेयानां-अस्थिभुजां

"श्वास्थि शुष्कं मुखे लात्वा, क्षिप्त्वा पादद्वयान्तरे ।
निजां लालां लिहन् मूढो, मन्यते रसनिर्भरम् ॥इति"

दुष्टविपरीताऽज्ञानमूलकप्रवृत्तिप्रवणानां शुनां 'तत्त्वदर्शी'-स्वशास्त्रमनोऽभीष्टशास्त्रावगाहनशीलतत्तत्त्व-दर्शनमात्रशालिनां

'दीपकपण्डिताःसर्वे वार्तामुच्चां लपन्त्यथ, दीपयन्ति परान् सर्वान् गच्छन्ति तमसि स्वयम्' ।

इति कथनमात्रकारिणां कर्त्तव्यविमुखानां पण्डितानां च मध्ये, भौतिकविषयवासनालम्पटानां विषयपदार्थरूपाशुचिभक्षणे शुनां च साक्षाद्विष्ठारूपाशुचिभक्षणे को भेदः ? अर्थान्नास्ति कश्चिद् भेदः, प्रत्युत बुद्धतत्त्वानां शिखरारूढानां पतनमिव बलवदनिष्टानुबन्धिनरकानुपातानन्तरं महावेदना संभवति, शुनां तु अशुचिभक्षणानन्तरं कदाचिद् बुभुक्षाशान्ति र्भवेत् शरीरमशुचिखरण्टितं भवत्येतावन्मात्राशुभमिति ॥५॥

अज्ञानपूर्विका (अज्ञानताहेतुना) वृत्ति र्न दुष्टा ?—

अबुद्धिपूर्विका वृत्ति-र्न दुष्टा तत्र यद्यपि ।
तथापि योगजादृष्ट-महिम्ना सा न सम्भवेत् ॥६॥

'तत्र यद्यपि'श्वान-तत्त्वज्ञानिमध्ये 'अबुद्धिपूर्विका वृत्तिः' अज्ञानहेतुना, द्वयोरेवाज्ञानं-श्वानस्य भवकृतमज्ञानं तत्त्वदर्शि-महामोहकृतमज्ञानरूपमन्धत्वं वर्त्तते तत्र यद्यपि दुष्टा वृत्तिरज्ञानपूर्वकत्वात् न

गण्यते तथापि 'योगजादृष्टमहिम्ना'=भक्तिज्ञानकर्मादि-योगाभ्यासजनितादृष्ट-कर्मणो माहात्म्येन सा दुष्टा वृत्ति र्न सम्भवेत्-तादृशादृष्टविशेष-माहात्म्यस्य तत्प्रतिबन्धकत्वेन तादृशदुष्टवृत्तेरसम्भव इति ॥६॥

**निवृत्ति-सापेक्षप्रवृत्तिमयाचारेणाथवा सामायिकवतो मुनेश्चित्तं वीतरागप्रायं भवति—**

निवृत्तमशुभाचारा-च्छुभाचार---प्रवृत्तिमत् ।
स्याद्वा चित्तमुदासीनं, सामायिकवतो मुनेः ॥७॥

'निवृत्तमशुभाचारात्'= अशुभो-दुर्गतिकारणत्वेन पाप आचारः, तस्मान्निवृत्तं-निवृत्तिमत्-विरतिमत्, चित्तं,'शुभाचारप्रवृत्तिमत्'सद्गतिशिवगतिहेतुत्वेन शुभः प्रशस्तो विहित आचारः, शुभाचारे प्रवृत्तिमत्-क्रियाकारकं चित्तं, एकप्रकारेण गुप्तिमच्चित्तमुदासीनं-वीतरागप्रायं भवत्यथवा द्वितीयप्रकारेण 'सामायिकवतो मुनेः' समतावच्छिन्नस्य सर्वथा मुनित्वावच्छिन्नस्यात्मारामममनसः साधोः सर्वथा मनोगुप्तिमतश्चित्तमुदासीनं वीतरागप्रायं भवति, ज्ञानयोगिनः प्रकारद्वयासदाचारनिवृत्ति-सदाचारप्रवृत्तिविशिष्ट-मुनित्वानच्छिन्नसमतावच्छिन्नरूपमनोगुप्त्यादिद्वारा वीतरागप्रायचित्तसम्प्राप्तिर्भवतीति ॥७॥

**विधिनिषेधप्रकारा अज्ञाननियन्त्रिता न ?--**

विधयश्च निषेधाश्च न त्वज्ञाननियन्त्रिताः ।
बालस्याऽऽगमे प्रोक्तो नोद्देशः पश्यकस्य यत् ॥८॥

विधयः'=विधिरूपोपदेशाः 'निषेधाश्च' च निषेधरूपोपदेशाः 'नत्वज्ञाननियन्त्रिताः' अज्ञानवतः-रागादिमोहवतोऽपेक्ष्य न नियन्त्रिताः,-विहिताः,प्रणीताश्च'आगमे' आचारांगसूत्रे लोकविजयाध्ययने तृतीयोद्देश मध्ये, अयं चोद्देशः-उपदेशः, बालस्याऽनवगततत्त्वस्य विनेयस्य यथोपदेशं प्रवर्त्तमानस्य दीयते (यस्त्ववगतहेयोपादेयविशेषः स यथावसरं यथाविधेयं स्वत एव विधत्ते) इत्यभिप्रायं मनसिकृत्य 'बालस्यैवागमे प्रोक्त उद्देशः' 'यत् पश्यकस्य नोद्देशः'=पश्यकस्य-स्वत एव विदितवेद्यस्योद्देशः-उपदेशो न प्रोक्तः । उद्दिश्यते इत्युद्देशः-उपदेशः-सदसत्कर्त्तव्यादेशः सः, पश्यतीति पश्यः, स एव पश्यकस्तस्य न विद्यते, स्वत एव विदितवेद्यत्वात्तस्य, अथवा पश्यतीति पश्यकः-सर्वज्ञस्तदुपदेशवर्ती वा तस्य उद्दिश्यते इत्युद्देशो-=नारकादिव्यपदेशः-उच्चावचगोत्रादिव्यपदेशो वा स तस्य न विद्यते, तस्य द्रागेव मोक्षगमनादिति भावः । कः पुनर्यथोपदेशकारी न भवतीत्याह 'बाले' इत्यादि, बालो नाम रागादिमोहितःस पुनः कषायैः कर्मभिःपरीषहोपसर्गैर्वा निहन्यते इति निहः, स्निह्यत इति स्निहः स्नेहवान् रागीत्यर्थः, कामसमनोज्ञोऽनुपशमितदुःखः-दुःखी दुःखानामावर्त्त-मनुपरिवर्त्तते इति ॥८॥

**पश्यकविशेषस्य शास्त्रं नियामकं न युक्तम्—**



---

'उद्देशो पासगस्स नत्थि, बाले पुण निहे कामसमणुन्ने असमिय दुक्खे दुक्खी दुक्खाणमेव आवट्ट मणुपारियट्टइ (सू० ८२) त्तिबेमि' आ० लोक० अ०उ०-३)

न च सामर्थ्ययोगस्य, युक्तं शास्त्रं नियामकम् ।
कल्पाऽतीतस्य मर्यादा-प्यस्ति न ज्ञानिनः क्वचित् ॥९॥

'सामर्थ्ययोगस्येति'-सामर्थ्ययोगो द्विधा, धर्मसंन्यास-योगसंन्यास-भेदेन, एष क्षपकश्रेण्यां भवति मोक्षस्याऽव्यवहितकारणं धर्मसंन्यासयोगः, क्षपकश्रेण्यां जीवो द्वितीयापूर्वकरणं करोति, तदा तात्त्विकधर्म संन्यासनामकः सामर्थ्य–योगो भवति, अत्र क्षायोपशमिक-क्षमादयो धर्मा निवृत्ता भवन्ति, अतात्त्विकः 'धर्मसंन्यासः' प्रव्रज्याकालेऽपि भवति, यतोऽज्ञानासंयमकषायवेदमिथ्यात्वादय औदयिकभावास्तेषां संन्यासे त्यागी भवति, ('योगसंन्यासः' योगस्यार्थात् कायोत्सर्गादि-कायादिकार्याणां संन्यासः सयोगिकेवलिभिर्भगवद्भिःआयोजितकरणं कृत्वानन्तरं क्रियते इति).

विशिष्टसामर्थ्ययोगशालिपश्यकस्य शास्त्रं नियामकं न युक्तं यतो ज्ञानिनः कल्पातीतस्य क्वचित्-कुत्रचिन्मर्यादाऽपि नास्ति, सामर्थ्ययोगी कल्पातीतो ज्ञानी समुच्यते सामर्थ्ययोगिनां–कल्पातीतानां ज्ञानिनां पश्यकानां कथं मर्यादा ? कथं मर्यादानियामकं शास्त्रं ? इत्यर्थः ॥९॥

**क्रियाया अकिञ्चित्करत्वेन ज्ञानयोगरूपराजयोगस्य**
**साम्राज्यं भविष्यतोष्टत्वेनेति ? प्रश्नः—**

भावस्य सिद्ध्यसिद्धिभ्यां, यच्चाकिञ्चित्करी क्रिया ।
ज्ञानमेव क्रियामुक्तं, राजयोगस्तदिष्यताम् ? ॥१०॥

'भावस्य' भावस्य सिद्धिश्चेत्तदा क्रियाऽकिंचित्करी-निष्प्रयोजना, क्रियया कृतं, भावस्याऽसिद्धिर्प्राप्तिश्चेत्तदा क्रियाऽकिञ्चित्करी-निष्फला-क्रियया पर्याप्तं, 'ज्ञानमेव क्रियामुक्तं' क्रियया रहितं ज्ञानमेव राजयोगः-श्रेष्ठयोगः-योगराजत्वेन तत्-तस्मादिष्टत्वेन स्वीक्रियतामिति प्रश्ने प्रत्युत्तरीक्रियते ॥१०॥

मैवं नाऽकेवली पश्यो, नापूर्वकरणं विना ।
धर्मसंन्यासयोगी चेत्त्यन्यस्य नियता क्रिया ॥११॥

पूर्वोक्तप्रश्ने प्रत्युत्तरं कथयतीत्थं तथाहि-भो भ्रातः । एवं-यथा त्वं कथयसि तथा नास्ति, कः पश्य इति चेत् केवली पश्यो नेति नार्थात्केवली प्रथमःपश्यः, द्वितीयापूर्वकरणं विना धर्मसंन्यासयोगी पश्यो नार्थाद् द्वितीयापूर्वकरणं कृत्वा जीवः क्षपकश्रेण्यां क्षायोपशमिकधर्मसंन्यासयोगी तात्त्विकसामर्थ्ययोग-संपन्नो द्वितीयःपश्यको भवति, वस्तुतस्तु सर्वज्ञ-धर्मसंन्यास-योगरूपसामर्थ्ययोगं मुक्त्वाऽन्योऽपश्यको भवति, ततः कथ्यते, 'अन्यस्य नियता क्रिया'=सर्वज्ञधर्मसंन्यासयोगरूप-तात्त्विकसामर्थ्य-योगि-भिन्नस्या-

ऽन्यस्य सर्वस्याऽपश्यकस्य क्रिया=क्रियायोगो नियतः-नित्यकर्त्तव्यतया विहित एव तथा चान्यच्च शृणु तावत् ॥११॥

स्थैर्याधानाय सिद्धस्या-सिद्धस्याऽऽनयनाय च ।
भावस्यैव क्रिया शान्त-चित्तानामुपयुज्यते ॥१२॥

सिद्धो भावोऽस्थिरो माऽभूत्-स्थिरता शाश्वती भवत्वित्युद्दिश्य कथ्यते, 'स्थैर्याधानाय सिद्धस्य'-सिद्धस्य भावस्यात्यन्तस्थिरता-स्थापनाय तथा 'असिद्धस्याऽऽनयनाय च'=असिद्धस्याप्राप्तस्य भावस्याऽऽनयनाय सम्पादनाय क्रिया-शास्त्रविहितक्रिया, 'शान्तचित्तानामुपयुज्यते' अशान्तिरहित-शान्तिसहितमानसानां महात्मनां सदाकालमुपयुज्यत एवेति ॥१२॥

**क्रियां विना ज्ञानं सर्वं, न सार्थकं स्वेष्टस्थानदम्—**

क्रियाविरहितं हन्त, ज्ञानमात्रमनर्थकम् ।
गतिं विना पथज्ञोऽपि, नाप्नोति पुरमीप्सितम् ॥१३॥

हन्तेति निश्चये, क्रियाया अत्यन्ताभावसहितं सर्वं ज्ञानं निष्फलं-कार्यासमर्थं भवति, मार्गविषयकज्ञानरूपानुभववानपि न वाञ्छितं नगरं—किमपि स्थानं गतिनामिकां क्रियां विना नाप्नोति-गच्छति पुरुषार्थं

विना ज्ञानमात्रेण चतुर्थःपुरुषार्थः कथं लभ्यते ? यतो ज्ञानक्रियाभ्यां मोक्षः, भक्ष्यभोज्यमिष्टपदार्थज्ञानमात्रेण बुभुक्षा न शाम्यति तत्करणोपाय-ज्ञानक्रियाद्वारा—तत्सम्पादनेन भोज्यादिद्वारा तृप्ति र्भवति नान्यथेति ॥१३॥

यथाऽवसरं यथाऽधिकार यथास्थानं ज्ञानपूर्णानामपि
क्रियाया अपेक्षा, अपूर्णज्ञानानां तु का वार्त्ता ?—

स्वानुकूलां क्रियां काले, ज्ञानपूर्णोऽप्यपेक्षते ।
प्रदीपः स्वप्रकाशोऽपि तैल-पूर्त्यादिकं यथा ॥१४॥

'स्वानुकूलां क्रियां काले'=सिद्धिप्राप्ति र्न स्यात्तावत्साधकदशायां क्रियाया आवश्यकत्वं युज्यते, यद्यपि साधनाया भिन्नभिन्नदशासु क्रियाभेदो वर्त्तते परन्तु केवलिनां यथावसरं योगनिरोध-समुद्घातादि-क्रियाऽऽवश्यकत्वं स्व-स्वभावपुष्टये योग्यकाले योग्यक्रिया शरणीयैव, सर्वासु—सम्यक्त्वगुणस्थानकादारभ्य सर्वगुणस्थानक-भूमिकासु शास्त्रविहितक्रिया यथा "तत्राष्टमे गुणस्थाने शुक्लं सद्ध्यानमादिमम् । ध्यातुं प्रक्रमते साधुराद्यसंहननान्वितः ।" अष्टमे गुणस्थाने प्रथमवज्रर्षभनाराचसंहननी साधुः शुक्लध्यानात्मकक्रियामारभतेऽत्रापि ध्यानात्मकक्रियाऽऽवश्यक्येव । क्षीणघातिकर्मा, केवल्यपि सर्वसंवरक्रियां पूर्णानन्दप्राप्तिप्रसंगे योगनिरोधक्रियां, तत् पूर्वे च समुद्घातक्रियां करोति तथा च पापक्रियामात्रनिवा-

रणाय प्रतिपक्षरूपधर्मक्रिया कर्त्तव्येति तर्कसिद्धा, क्रियापेक्षा, यथेत्युदाहरणे-स्वयं प्रदीपः-दीपकः,स्वजन्यप्रकाशानानपि निमित्तहेतुभूत-तैलपूरणादिक्रियामपेक्षते, इलेक्ट्रिकलाईट स्वयं स्वप्रकाशवती सती 'स्वीच' नामन-क्रियां तथा पावरहाउस-जात करंट-विद्युत्प्रवाहागमनादिक्रियामपेक्षते तथाऽत्रापि ज्ञानपूर्णोऽपि काले स्वानुकूलां क्रियामपेक्षतेऽन्यथा सिद्धिरसम्भविन्येव ॥१४॥

**बाह्यभावरूपा क्रियाऽस्तीतिवादं प्रति प्रतिवादः—**

बाह्यभावं पुरस्कृत्य, ये 'क्रियां व्यवहारतः ।
वदने कवलक्षेपं, विना ते तृप्तिकाङ्क्षिणः ॥१५॥

('अक्रियां—क्रियाऽभावं कथयन्तीति शेषः पाठान्तरे)

केचिच्छुष्कज्ञानिनो वदन्ति च पोषध-प्रतिक्रमण-प्रभुदर्शनपूजनगुरुसेवाभक्तिप्रतिलेखनतपश्चर्यादिकाः सर्वा एताः व्यवहारक्रिया बाह्यभावरूपाः, एताभ्य आत्मनः किञ्चित्कल्याणं कथं भवेत् ? कायजन्यत्वादिति मतं तदा हिंसाऽसत्यचौर्यदुराचार-परिग्रहादिजन्यक्रियाः कुर्वतामहिंसासत्याचौर्यसदाचारनिष्परिग्रहतायाः सिद्धिः कथं साध्या स्यात् ? किं रूपरमणीनां नटीनां दर्शनसत्कारादिमदान्धश्रीमतां सेवादिं, सुन्दरभिन्नभिन्नवेषभूषां मनोमोदकमादकभोजनादिं च कुर्वतामात्मनः शुद्धबुद्ध-निरञ्जन-निराकारमयी दशा भविष्यति ? भ्रात मां प्रमादं गमय भ्रान्तौ मा पत ! स्वस्थो भूत्वा निराग्रहः सन् महर्षीणामनुभवसिद्धवचनानां मर्म विचारय । बाह्यभावस्तु शुभाऽशुभभेदाद् द्विधा यत्रात्मा विस्मृत एकमात्रविषयानन्द-

प्राप्ति लक्ष्यभूता सा क्रियाऽशुभबाह्यरूपाऽस्ति, परन्तु यत्रात्मनो मधुरा स्मृति र्वर्तते, एकमात्रात्मानन्दानुभूति लक्ष्यभूता यत्र परमकारुणिकं परमात्मानं प्रति भक्तिपूजाबहुमानादिः, यत्र पापेभ्यो मुक्तये शुचितमो भावोऽस्ति, एतादृशी काऽपि क्रिया शुभबाह्यभावरूपाऽस्ति, अशुभपापक्रियाणामनादिकुत्सितव्यसनं शुभधर्मक्रियाणां शरणस्वीकारं विना कथं चलेत् ? तत्तदात्मगुणप्रकटनाय शुभपवित्रबाह्यक्रियामयानुष्ठानान्यनुष्ठेयान्येव, अनन्तज्ञानिपरमपुरुषतीर्थंकरदेवेन मनोवचःकायसत्काः क्रिया आत्मशुद्धये प्रदर्शितास्ताः सादरं विधेयाः, यदि स्वात्मशुद्धिकृते सत्यभावना स्याद् , यथा मुखे कवलक्षेपं विना क्षुधाशान्तिः कथं भवेत् यदि तृप्तिसुखस्यानुभव इष्टस्तदा मुखे कवलक्षेपात्मकक्रियाऽवश्यं कर्त्तव्यैव तथा परमात्मसुखस्यानुभव इष्टस्तदा तदर्थमावश्यकक्रियाऽऽवश्यकी अर्थाद् ये नास्तिकाभा बाह्यभावं पुरस्कृत्य व्यवहारापेक्षया क्रियां निषेधन्ति ते, कवलक्षेपं मुखेऽकृत्वा तृप्तिकाङ्क्षिणो-मूर्खशिरोमणयः कथ्यन्ते, कदाचिदपि तृप्तेराकांक्षा कवलक्षेपं विना न पूर्यत एवेति ॥१५॥

भावस्य योगक्षेमकरी सत्क्रिया कार्यैव –

गुणवद्–बहुमानादे - र्नित्यस्मृत्या च सत्क्रिया ।
जातं न पातयेद् भावमजातं जनयेदपि ॥१६॥

भावानां चञ्चलस्वरूपमेतद्विचारणीयं प्रतिसमयं प्रमादाभावपूर्वकं जाताः सुरक्षिता भावास्तिष्ठन्ति, प्रमादत उपेक्षिता अरक्षिता जाता अपि भावा गच्छन्ति । स्वस्या-मूल्यसुदुर्लभसम्पत्तिरूपसंजातशुभभावस्य संरक्षणाय, चक्रवर्त्यादि-बाह्यसम्पदोऽपि अनन्तगुणमहत्त्वं मनसि निर्धार्य, यत्किञ्चित्प्राणादिदानाय सदा कटिबद्धा भवन्तु भव्याः ।

परिपहानुपसर्गान् परदत्तत्रासानपि सहित्वा निर्मल-शुभभावरत्नं रक्षणीयमेव तदर्थमेवोपाध्यायमहाराजः शिक्षयति तद्रक्षणोपाय-दर्शनपूर्वकं 'गुणवद्बहुमानादेःसत्क्रिया'=गुणवतां अर्हदादीनां बहुमानप्रेमभक्तिश्रद्धादिद्वारानमनादिसत्क्रिया शुभभावयोगक्षेमकरी भवति, आदिपदेन 'पापजुगुप्सा'=त्यक्तपापकर्माणि प्रति कदाचित्प्रमादत आकर्षणं न भवेदेतदर्थं पापानि प्रति घृणा-तिरस्कारबुद्धिः कार्यैव 'परिणामालोचनं' कर्मणां परिमामोऽर्थात् पुण्यपापयोः फलं भवत्येव, दुखंपापात्सुखं धर्मादिति सूत्रमविस्मरणीयमेव 'तीर्थंकरभक्तिः' परमात्मानं प्रति नामस्मरणदर्शनपूजनादि तथानन्तोपकाराणां पुनःपुनः स्मृतिं कृत्वा तान् प्रति प्रीतिभक्तिबहुमानादिधारणतः शुभभाववृद्धिः,'सुसाधुसेवा'मोक्षमार्गानुकूलप्रवृत्तिकारकसुविहितसाधूनां भक्तपानवस्त्रपात्रवमति औषधादिसेवा 'उत्तरगुणश्रद्धा' प्रत्याख्यानगुरुवंदनप्रतिक्रमण-तपस्त्याग-विनयादिक्रियाकलापविषयकप्रयत्नः 'नित्यस्मृत्या च' तथाव्रत प्रतिज्ञाऽभिग्रहादिस्मरणद्वाराऽऽत्मनीदृशी शक्तिराविर्भवति यतः या शक्तिरशुभभावान् मनोमन्दिरान्निष्काशयति, शुभभावे परमस्थैर्यं

जनयत्येव अर्थात् गुणवद्बहुमानादिरूपोपायतः:, नित्यस्मृत्या च क्रियमाणा सत्-क्रिया, प्रबलशक्तिमती सती जात- मुत्पन्नं भावं-शुभभावं न पातयेत्-पतनक्रियां कारयितुं न समर्था भवेत् , अजातमनुत्पन्नं शुभभावं जनयेत्-शुभभावजनने हेतुर्भवति, इदमेव हृदयं, सर्वज्ञप्रणीता, गुणवद्बहुमानादिद्वारा नित्यस्मरणद्वारा सत्क्रिया, शुभभावविषयकपरमयोगक्षेमकरी भवत्येव तत्र शंका कदाचिदपि न कार्येति ॥१६॥

**क्षायोपशमिकभावे क्रियमाणक्रिया, पतितस्य पुनरुद्धारिणी—**

क्षायोपशमिके भावे, या क्रिया क्रियते तया ।
पतितस्याऽपि तद्भावप्रवृद्धि र्जायते पुनः ॥१७॥

क्षायोपशमिकभावे या तपःसंयमानुकूला क्रिया क्रियते, तया·क्रियया, पूर्वप्राप्तभावात्पतितस्य पुनस्तद्भावपूर्वप्राप्तभावस्य प्रकृष्टा वृद्धि र्जायते उत्पद्यते, तत्तत्क्रिया,शुभभावरक्षिका, गुप्ति-समाऽस्ति शुभभावरूपकण्टकवाटकेऽल्पेऽपि च्छिद्रे पतितेऽशुभभावरूपाः पशवः प्रविश्य, उत्थितं शुभभावरूपं पाकं भक्षयन्ति स्म, गुप्ति-वाटं विना पाकरक्षाऽसम्भविनी रहस्यमिदं कृषीवलोऽपि जानाति, ततः किं बुद्धिमान् साधको न जानीयाद् ! महाव्रतादि-ज्ञानदर्शनचारित्रादिभावान् संरक्षितुमनन्तज्ञानिना परमात्मजपतपः-

संयमाद्या अनेकविधाः क्रिया दर्शिता एव क्रियात्यागं कृत्वा-पुष्टालम्बनं मुक्त्वा क्रियां शुभभावरत्नोत्पत्तिरूपां (शुभभावयोगं) तथोत्पन्नशुभभावसंरक्षणरूपक्षेमसत्कां मुक्त्वा ग्रथिलवत् क्रियमाणां वार्त्तामपि मा शृण्वन्तु भव्याः यथाऽशुभक्रियाभिरशुभभावा जायन्ते तथा शुभक्रियाभिः शुभभावाः कथं न भवेयुः ? भवेयुरेवेति ॥१७॥

गुणानां वृद्ध्यर्थं स्थिरतासिद्ध्यर्थं वा क्रिया कार्या —

गुणवृद्ध्यै ततः कुर्यात् , क्रियामस्खलनाय वा ।
एकं तु संयमस्थानं, जिनानामवतिष्ठते ॥१८॥

'ततः–पूर्वकथितविवेचनतः, गुणवृद्धिरूपफलजनिकाऽथवाऽस्खलन–गुणभावस्थिरतारूपफलजनिका क्रियाऽवश्यं कर्त्तव्या यतो जिनानामेकमप्रतिपाति संयमस्थानमवतिष्ठते नाऽन्येषां छद्मस्थानां । 'क्रिया गुणवृद्धयेऽस्खलनाय वा कर्त्तव्या' तथाहि=यथा सामायिकनाम्नी क्रिया समता-रागद्वेषाभावरूपसमतागुणस्य वृद्धये भवितव्या, यथा यथा सामायिकक्रिया क्रियमाणा सती तथा तथाऽत्मनि समतागुणो वर्धनीय एव, सुखदुःखादि-प्रसंगे, उन्मादशोकादिवृत्तिर्मन्दा भवेत् , अर्थात् सामायिकक्रिया, समतागुणरत्नवृद्धिरक्षणादिफलजनिकैवेति । एवं प्रतिक्रमणक्रिया, पापघृणा-पापनिंदा-पापत्यागरूपगुणफलवृद्धि-

जनिका प्रतिक्रमणक्रियाऽस्ति तपश्चर्या-आत्मनोऽनाहारित्वगुणवृद्धिफलजनिकाऽथवाऽऽहारसंज्ञानामकदोषक्षयफलजनिका तपश्चर्यानामकक्रिया प्रसिद्धाऽस्ति 'गुरुसेवा-विनयक्रिया'-नम्रता-लघुताज्ञानादिगुणवृद्धिफलजनिका गुरुसेवा-विनय-वैयावृत्त्यादिक्रिया । तीर्थयात्राक्रिया सिद्धगिरिरैवतगिरि-सम्मेतशिखरादितीर्थेषु क्रियमाणा तीर्थयात्राक्रिया परमात्मानं प्रति प्रीति-भक्ति-पूजा-बहुमानादि-सम्यक्त्वादिगुणवृद्धिफलजनिका भवति तथाचैवंरीत्या दान-शील-तपः-स्वाध्यायसंलेखना-अनशनविविधाऽभिग्रहादिरूपशुभक्रिया अभिनवात्मगुणवृद्धिदोषक्षयादिरूपफलजनिकैव यतः छद्मस्थजीवानां संयमस्याऽध्यवसायस्य स्थानानि चञ्चलानि-प्रतिपातस्वभावानि ये संपूर्णगुणपूर्णा केवलिनस्तेषां स्वगुणानां प्रतिपातभयाऽभावात् संयमस्थानमेकमप्रतिपाति शाश्वतमवतिष्ठत एवेति ॥१८॥

अज्ञान-नाशकं ज्ञानमात्रं न, क्रियाऽपि ।—

अज्ञान-नाशकत्वेन, ननु ज्ञानं विशिष्यते ? ।
नहि रज्जाव-हि-भ्रान्ति र्गमनेन निवर्त्तते ॥१९॥

अज्ञाननाशकत्वापेक्षातः क्रियातो ज्ञानं ननु विशिष्यते—अतिशेते विशेषतावद्भवति ? 'हि'-किल-यतो रज्जुगताऽहिभ्रान्ती—रज्जुत्ववति सर्पविषयकभ्रमः—रज्जावयं सर्प इति बुद्धिरूपभ्रान्तिः 'तदभाववति

॥१४५॥

तत्प्रकारकं ज्ञानं भ्रमः' अहित्वाद्यभाववति अहित्वादिप्रकारकं ज्ञानं रज्जौ भ्रमरूपाऽप्रमा सा रज्जुगता हि भ्रान्तिः ननु-निश्चये च तर्के, क्रियातोऽज्ञाननाशकत्वेन ज्ञानं विशिष्यतेऽतिशेते ? हीति किलोदाहरणेऽथ रज्जावहिभ्रान्ति र्गमनक्रियाद्वारा हि निवर्त्तते-निवृत्ता भवति अपि तु सम्यग्ज्ञानेन निवर्त्तते न, ॥१९॥

पूर्वोक्तवस्तुस्वीकारेऽपि ज्ञानिनोऽपि क्रियोपयुज्यते —

सत्यं क्रियाऽऽगमप्रोक्ता, ज्ञानिनोऽप्युपयुज्यते ।
सञ्चिताद्दृष्टनाशार्थं, नासूरोऽपि यदभ्यधात् ॥२०॥

सत्यमर्धस्वीकारेऽव्ययं अर्धस्वीकरणीयं पूर्वोक्तमस्ति परन्तु आगमे कथिता क्रिया, सञ्चितादृष्टस्य-अनादिमहजकर्ममलस्य नाशाय, ज्ञानिनोऽपि—सम्यग्ज्ञानवतोऽपि ज्ञानतोऽप्यनाश्यसहजकर्ममलप्रक्षालनाय, क्रियानाश्यकर्मनाशाय, आगमक्रिया उपयुज्यते-उपयोगवती-सप्रयोजना-सफला भवत्येवं, एतद्विषये 'सञ्चिताऽदृष्टनाशार्थं नासूरोऽपि यदभ्यधात्' नासूरनामकाभियुक्ततम-वेदान्ताचार्योऽपि कथयामास, तदग्रेतनश्लोके कथयिष्यते ॥२०॥

तण्डुलस्य यथा वर्म, यथा ताम्रस्य कालिका ।
नश्यति क्रियया पुत्र ! पुरुषस्य तथा मलम् ॥२१॥

जीवस्य तण्डुलस्येव, मलं सहजमप्यलम् ।
नश्यत्येव न सन्देह-रतस्मादुद्यमवान् भव ॥२२॥

'यथा तण्डुलस्य'चर्म-उपरिस्थकवच (त्वक्) सदृशमलं; 'यथा ताम्रस्य कालिका'-कालस्य भावः कालिका-मालिन्यं वैवर्ण्यं हे पुत्र ! क्रियया विशिष्टोपायपूर्वकपुरुषार्थबलेन नश्यति, तथा पुरुषस्य-आत्मनोऽनादि-सिद्धसहजमलरूपसञ्चितादृष्टं, विशिष्टपुरुषार्थरूपक्रियाबलेन नश्यत्येव, यथा तण्डुलस्य तथा जीवस्याऽऽत्मनः सहजमलं सञ्चितादृष्टमपि अलं-समर्थमपि नश्यत्येवात्र सन्देहः—शङ्का न कर्त्तव्या,हे पुत्र ! तस्मात् सहजमलरूपसञ्चितादृष्टनाशायोद्यमवान्-पुरुषार्थरूपक्रियाशाली भव-सज्जो भव । तादृशपुरुषार्थरूपक्रियायां शक्तिरेवंविधाऽस्ति यतस्तद् बलेन सञ्चितादृष्टरूप-कर्म विनश्यत्येव यत एतत् क्रियानाश्यं, न ज्ञाननाश्यमस्ति ॥२१॥२२॥

दर्शनभेदे शब्दभेदे सत्यपि कर्मणःपर्याया एते—

अविद्या च दिदृक्षा च, भवबीजं च वासना ।
सहजं च मलं चेति, पर्यायाः कर्मणः स्मृताः ॥२३॥

भवकारणभूतकर्मण एते पर्यायाः—पर्यायवाचकाः शब्दास्तथाहि=अविद्येति-वेदान्तिनो वदन्ति,

भवं द्रष्टुमिच्छा कुतूहलवृत्तिरूपा दिदृक्षा इति केचित् साङ्ख्या वदन्ति, भवबीजं इत्यन्ये वदन्ति, बौद्धा वासनेति वदन्ति नास्तिकाद्याः 'सहजं मलमिति वदन्ति, पतञ्जलि-अक्षपादाद्या ऋषयः क्लेशेति सांख्या वदन्ति एते सर्वे, कर्मणो जैनशासनाभिमतस्य पर्यायाः एकार्थकर्मरूपार्थवाचका न तु कर्मभिन्नार्थवाचका इति ॥२३॥

ज्ञानिनोऽदृष्टं नास्तीति मतं दोषावहं—

ज्ञानिनो नास्त्यदृष्टं चेद् , भस्मसात्कृतकर्मणः ।
शरीरपातः किं न स्या-ज्जीवनादृष्टनाशतः ॥२४॥

'भस्मसात्कृतकर्मणः' ज्ञानाग्निः सर्वकर्माणीत्यादिभगवद्गीतोक्तिद्वारा भस्मसात् कृतानि कर्माणि यस्य तस्य भस्मसात्कृतकर्मणो ज्ञानिनः 'अदृष्टं' 'जीववृत्ती गुणौ वासनाजन्यौ स्वर्गादिनरकादिहेतू धर्माधर्मौ 'अदृष्टं' कथ्यते तज्ज्ञानिनो भस्मान्कृतकर्मणो नास्त्येवेति चेद् यतो जीवो जीवति तदायुष्कर्म-जीवनादृष्टं तस्य नाशतः, 'शरीरपातः'शरीरस्य पतनं, अदृष्टमात्ररहितस्य ज्ञानिनः कथं न स्यादिति प्रश्ने वेदान्तवादी, प्रत्युत्तरं ददाति—॥२४॥

शरीरमीश्वरस्यैव, विदुषोऽप्यवतिष्ठते ।
अन्यादृष्टवशेनेति, कश्चिदाह तदक्षमम् ॥२५॥

धर्माधर्मरहितस्येश्वरस्य शरीरं यथा अन्येषामदृष्टवशेनाऽवतिष्ठते तथा विदुषः-अदृष्टरहितज्ञानिनः शरीर मन्येषां भक्तादीनामदृष्टवशेनाऽवतिष्ठते-अवस्थितिमद् भवति, इति-कश्चिद् वादी कथयति तत् सहनार्हं नेति ॥२५॥

प्रतिवादी प्राह—

शरीरं विदुषः शिष्याद्यदृष्टाद्यदि तिष्ठति ।
तदाऽसुहृद्-दृष्टेन, न नश्येदिति का प्रमा ? ॥२६॥

'शरीर'मिति विद्वत्तासंपन्नस्य ज्ञानिनो गुरोः 'शिष्याद्यदृष्टाद्' शिष्यभक्तस्नेहिनामदृष्टात्-कर्मतः शरीरं यदि तिष्ठति, तदाऽमित्र-शत्रूणामदृष्टेन कर्मणा, नश्येन्नाशमाप्नुयान्नेति तत्र का प्रमा-प्रमाणं किं ? यथा शिष्यादीनामदृष्टं-धर्माऽधर्मात्मकं कर्मज्ञानिशरीरस्थितिकारणं तथा अत्र विनिगमनाविरहेण, अमित्रादीनामदृष्टं ज्ञानिशरीरस्थितिप्रतिबन्धकं नेति तत्र किं प्रमाणं इत्यर्थः ? अर्थात् प्रमाणाभाव-प्रयुक्तो ज्ञानिशरीरस्थितिनियामक-शिष्याद्यदृष्टकारणाभावो ज्ञेय इति ॥२६॥

अत्र वादिना नैयायिकानां सिद्धान्तं प्रमाणत्वेन पुरस्कृत्य स्वमतं साध्यते—

न चोपादाननाशेऽपि क्षणं कार्यं यथेष्यते ।
तार्किकैः स्थितिमत्तद्वच्चिरं विद्वत्तनुस्थितिः ॥२७॥

यथा कार्यस्य-जन्यस्योपादान-मूलकारणस्य नाशे-ध्वंसेऽपि तार्किकैः-नैयायिकैः कार्यं क्षणं-क्षण-पर्यंतं स्थितिमदिष्यते-मतविपर्यीक्रियते तद्वत्-नैयायिकस्येव क्षणं कार्यं नेष्यते परन्तु चिरं-दीर्घकालपर्यन्त-विद्वत्तनुस्थितिः-ज्ञानिशरीरस्थिति र्वेदान्तिभिरिष्यते इति (चिरं विद्वत्तनुस्थितिर्नेत्यप्यर्थो लगनीयः)॥२७।

**नैयायिकाभिमतनिरुपादानकार्यस्थितिः सहेतुकत्वेनेष्टा—**

निरुपादान-कार्यस्य क्षणं यत्तार्किकैः स्थितिः ।
नाशहेत्वन्तराभावा-दिष्टा न च स दुर्वचः ॥२८॥

यत् कारणात् तार्किकैः—उपादान-भिन्ननाशहेत्वन्तर-ध्वंसजनकान्यहेतूनामभावात् , निरुपादान-उपादानरहितकार्यस्य क्षणं क्षणकालपर्यन्तं स्थितिरिष्टा-सिद्धान्तत्वेनाभिमता स नाशहेत्वन्तराभावश्च न दुर्वचः-अपि तु सूपपाद एवेति ॥२८॥

**कथं न गुरुश्चिरं जीव्येत ? इत्यापादनं—**

अन्यादृष्टस्य तत्पात-प्रतिबन्धकतां नयेत् ।
म्रियमाणोऽपि जीव्येत, शिष्यादृष्टवशाद् गुरुः ? ॥२९॥

यदि 'अन्यादृष्टस्य'-शिष्याद्यन्यगतमदृष्टं गुर्वादि-शरीर-पतनस्य प्रतिबन्धकं-बाधकं भवेत् तदा म्रियमाणोऽपि-मृत्युं गच्छन्नपि गुरुः शिष्याणामदृष्टवशाद् जीव्येत-जीवनं पुनःप्राप्नुयादेवेति? ॥२९॥

॥१५०॥

स्वभावतो निरुपादानज्ञानिशरीरस्थितिरिति मतं न सुन्दरम्—

स्वभावान्निरुपादानं यदि विद्वत्तनु-स्थितिः ।
तथापि काल-नियमे तत्र युक्ति नं विद्यते ॥३०॥

'स्वभावादि'ति=यदि निसर्गतो निरुपादानं यथा स्यात्तथा उपादानरहिता, विदुषां-ज्ञानिनां 'तनुस्थितिः' शरीरेऽवस्थानमिति मतं स्थाप्यते तथापि तत्र कालनियमे-कियत्कालं शरीरे स्थास्यतीति-चिराचिरकालस्य नियमो-नैयत्यं नास्तीति कथ्यतेऽर्थात् तत्र कालनियमे कापि युक्तिः-उपपत्ति नं विद्यत एवेति ॥३०॥

कस्यचिन्निरंकुशस्य वेदान्तिनश्चेदं मतं चिन्त्यम्—

उच्छृङ्खलस्य तच्चिन्त्यं, मतं वेदान्तिनो ह्यदः ।
प्रारब्धा-दृष्टतः किन्तु, ज्ञेया विद्वत्तनुस्थितिः ॥३१॥

सर्वत्र युक्ति-उपपत्तिरूपशृङ्खला-रहितस्य उच्छृङ्खलस्य कस्यचिद् वेदान्तिनो, हीति किलार्थे, अदः-इदं मतं स्थापितमस्ति तच्चिन्त्यं-युक्तिपूर्वकं सर्वथा विमृश्य यद् युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रह इति न्यायादयुक्ति यत्र तत्तत्त्याज्यमेव, तत्र प्रतिवादे युक्तिःप्रदर्श्यते='प्रारब्धादृष्टतः किन्तु ज्ञेया विद्वत्तनुस्थितिः' परन्तु विदुषां-ज्ञानिनां तनुस्थितिःशरीरस्थितिः, प्रारब्धरूपादृष्ट-कर्मतो भवति 'तत्तच्छरीर-

भोगजनकं यत्कर्म तत्प्रारब्धं' तत्त्वज्ञानिनः शरीराऽवस्थानं सुखदुखादिः, प्रारब्ध-(निकाचित-निरुपक्रमेति जैनपरिभाषायां) कर्मयोगतो भवति हे वादिन् ! त्वत्सिद्धान्तपरिभाषितप्रारब्धादृष्टतो-ज्ञानिनः शरीरस्थिति र्भवति न तु शिष्याद्यदृष्टवशादिति भृशं चिन्त्यमिति यस्य यत्कर्म तस्यैव तद्वशात्फलं नाऽन्यादृष्टवशादन्यथा जगत्यव्यवस्था भवेदित्यपि चिन्त्यमिति ॥३१॥

**ज्ञानेन नाश्यं किं कर्म? ज्ञानाऽनाश्यं किं कर्म?—**

तत्प्रारब्धेतरादृष्टं, ज्ञाननाश्यं यदीष्यते ।
लाघवेन विजातीयं, तन्नाश्यं तत् प्रकल्प्यताम् ॥३२॥

ज्ञानिनो यत् प्रारब्धात्-ज्ञानाऽनाश्यकर्मत-इतरद्-भिन्नमदृष्टं कर्म तज्ज्ञाननाश्यं-ज्ञानेन ध्वंसविषयमिष्यते-मतविषयीक्रियते, तत-तस्मात्कारणात् लाघवप्रयुक्तं ज्ञाननाश्यजातिविशिष्टकर्म-भिन्नं प्रारब्धादिकं विजातीयं तत्क्रियानाश्यं-ध्वंसविषयं प्रकल्प्यतां-प्रकल्पनाविषयीक्रियतामर्थाद् ज्ञाननाश्य-भिन्नविजातीयं प्रारब्धादिकं शेषं कर्म; क्रियानाश्यमेवेति, मतविषयीक्रियतामिति भावः ॥३२॥

**ज्ञानिनो ज्ञानाऽनाश्य-क्रियानाश्यकर्मक्षयार्थं क्रिया—**

इत्थं च ज्ञानिनो ज्ञान-नाश्यकर्मक्षये सति ।
क्रियैकनाश्यकर्मौघ-क्षयार्थं साऽपि युज्यते ॥३३॥

इत्थं च-किञ्चानेन प्रकारेण ज्ञानिनो ज्ञानेन नाश्यकर्मणो-धर्मयोग्यादृष्टस्य क्षये सति ज्ञानाऽनाश्य-मात्रक्रिया-प्रायश्चित्त-भोगादि-मात्रक्रियानाश्य—कर्मौघ-सञ्चिताविहितादि- कर्मसमूहस्य क्षयार्थं-क्षयमुद्दिश्य साऽपि क्रियाऽपि-भोगादिक्रियाऽपि, (अपिना ज्ञानं गृह्यते,) युज्यते-युक्तियुक्ता भवतीति ॥३३॥

**सर्वकर्मक्षये ज्ञानकर्मव्याप्तिप्रयुक्तज्ञानकर्मसमुदायः—**

**सर्वकर्मक्षये ज्ञान-कर्मणोस्तत्समुच्चयः ।**
**अन्योऽन्य-प्रतिबन्धेन तथा चोक्तं परैरपि ॥३४॥**

'सर्वे'ति, ज्ञाननाश्यकर्मक्षयः केवलज्ञानेन पृथक्त्वेन भवति, ततः क्रियानाश्यकर्मनाशोऽपूर्णः,क्रियानाश्यकर्मनाशः केवल-क्रियया पृथक्त्वेन भवति. ततो ज्ञानानाश्यकर्मनाशोऽपूर्णो भवति. स्वतंत्रतया-पृथक्तया स्वस्वनाश्यकर्मनाशो भवति. परन्तु सम्पूर्णतया कर्मनाशो न भवति. ततः संपूर्णतया कर्मनाशकः क इति प्रश्ने संजाते कथ्यते, पृथक्पृथग्रूपेण ज्ञानकर्मणो हेतुत्वे सत्यपि सर्वकर्मक्षये सकलकर्मक्षयं प्रति तु 'अन्योऽन्यप्रतिबन्धेन तत्समुच्चयः' परस्परव्याप्तिसम्बन्धपूर्वकं, अर्थात् कर्मप्रतिबद्धज्ञानं ज्ञानव्याप्ता क्रियेत्येवमभेदेन कर्मज्ञानव्याप्तिपूर्वकं ज्ञानकर्मणोः समुच्चयनं समाहरणं (अनेकस्यैकत्र स्थानं) ज्ञान-

॥१५३॥

कर्मणोःसमुदायः, समुदिते कर्मज्ञाने सर्वकर्मक्षयं प्रति हेतुभूते इत्यर्थः, तथा च परैर्दर्शनान्तरीयैरप्युक्तमस्ति तथाहि=॥३४॥

न यावत् सममभ्यस्तौ, ज्ञानसत्पुरुषक्रमौ ।
एकोऽपि नैतयोस्तावत्, पुरुषस्येह सिद्धयति ॥३५॥

'सममभ्यस्तौ' साध्यसिद्धिपर्यन्तं सहैव सर्वदा सर्वथा सम्यग्रूपेणाभ्यासः-पुनःपुनरावर्त्तनं तद्विषयीभूतौ-सममभ्यस्तौ, यावन्न सममभ्यस्यतौ यत्कालपर्यन्तं कौ न सममभ्यस्तौ ? तदाह 'ज्ञानसत्पुरुषक्रमौ' यथा सहैव चक्राभ्यां द्वाभ्यां रथो गच्छति तथा सहैव ज्ञानक्रियाभ्यां साधना-रथो गच्छति, ज्ञानं च सत्पुरुषक्रमश्च=ज्ञानसत्पुरुषक्रमौ ज्ञानपरमपुरुषविहिताचरितक्रियारूपाचारौ ज्ञानेन सहैव सत्पुरुषक्रियारूपाचारः, अभ्यसनीयः-पुनःपुनःकार्यः सत्पुरुषाचारेण सहैव ज्ञानं सममभ्यसनीयं यावन्न सममभ्यस्तौ ज्ञानसत्पुरुषक्रियाचाररूपक्रमौ, 'तावन्नैतयोरेकोऽपि पुरुषस्येह सिध्यति=तावदेतयो र्ज्ञानसत्पुषक्रमयो र्मध्यादेकोऽपि सत्पुरुषक्रमरूपक्रियारूपोऽप्यथवा ज्ञानरूप एकोऽपि योगः, इह-जन्मन्यस्मिन्न सिध्यति—साध्यसिद्धिरेकाऽपि न भवति प्रत्युताऽतो भ्रष्ट स्ततो भ्रष्ट इत्यवदशायां गच्छति साधुरिति ॥३५॥

ज्ञानकर्मणी परस्परव्याप्ते सहैव गच्छतः सहैव तिष्ठतः—

यथा छाद्मस्थिके ज्ञान-कर्मणी सह गत्वरे ।
क्षायिके अपि विज्ञेये, तथैव मतिशालिभिः ॥३६॥

यथेत्युदाहरणे 'छाद्मस्थिके'-सति घातिकर्मणि क्षयोपशमजनिते क्षायोपशमिके ज्ञानं च कर्म च ज्ञानकर्मणी उभे छद्मस्थावस्था-गमनाऽनन्तरं ज्ञानकर्मणी 'सह गत्वरे सहैव ज्ञानं च कर्म चोभे गमन शीले तथैव-तेन प्रकारेण 'क्षायिके अपि' घातिकर्मक्षयाद्यनन्तरं ज्ञानकर्मणी-केवलज्ञानं च योगनिरोधरूपा क्रिया च सहैव केवलज्ञानेन सहैव योगनिरोधक्रिया, योगनिरोधक्रियया सह केवल ज्ञानं च सिद्धिगतो-सिद्धेः सह शाश्वतस्थितिं गत्वा-प्राप्य तिष्ठतः, इति मतिशालिभिः-बुद्धिशालिभिर्विज्ञेये इति क्षायिकज्ञान-क्रिययोः सह स्थानित्व-स्वभावः-परस्परसङ्गतत्व-व्याप्तिस्वभावःततः क्षायोपशमिकक्षायिकदशाभेदेऽप्येक-(सहव्याप्ति) प्रकृतिके ज्ञानकर्मणी स्तः, क्षायोपशमिकयो गमनमपि सहैव क्षायिकयोः स्थितिरपि ज्ञान-कर्मणोः सहैवेति, ज्ञानं मुक्त्वा न क्रिया, च क्रियां मुक्त्वा न ज्ञानं च कदाचिदपि क्षायोपशमिके स्याता-मथवा क्षायिके स्यातां सहैव गच्छतःसहैव तिष्ठत इति बोध्यम् ॥३६॥

पूर्वोक्तविषयं विशदयति—

सम्प्राप्त-केवलज्ञाना अपि यज्जिनपुङ्गवाः ।
क्रियां योगनिरोधाख्यां कृत्वा सिद्ध्यन्ति नाऽन्यथा ॥३७॥

'सम्प्राप्तकेवलज्ञानाअपि यज्जिन-पुङ्गवाः='यस्मात्कारणात् , सामान्यजिनादिषु मुख्या जिनपुङ्गवा जिनेश्वराः, अप्रतिपातित्वेनाऽनन्तत्वेन 'सं' सम्यक्तया प्राप्तं-आत्मसात्कृतं केवलज्ञानं येषां ते, सम्प्राप्तकेवलज्ञाना जिनेश्वरा अपि (अन्येषां तु का वार्त्तेत्यपिना द्योत्यते) योगनिरोधाऽऽख्यां क्रियां कृत्वा सिद्ध्यन्ति नाऽन्यथा'=मनोवचःकाययोगात्मकयोगनिरोधात्मिकां क्रियामन्तर्मुहूर्त्तकालं पर्यन्तं कृत्वाऽयोगिकेवली भूत्वा सिद्धा भवन्ति 'नाऽन्यथा' योगनिरोधाख्यां क्रियामकृत्वा न सिद्धिगतौ गच्छन्ति (योगनिरोधनामकान्तिम-क्रियायाः प्रक्रियाऽन्यत्रान्वेषणीयैव) ॥३७॥

**ये ज्ञानक्रियोभयतो भ्रष्टास्ते नास्तिका एव—**

**तेन ये क्रियया मुक्ता, ज्ञानमात्राऽभिमानिनः ।**
**ते भ्रष्टा ज्ञानकर्मभ्यां, नास्तिका नात्र संशयः ॥३८॥**

'तेन' हेतुना ये आत्मानः, क्रियया-स्वस्वधर्मशासनविहितकर्मणा रहिताः-क्रियाऽभावनिश्चयवन्तः, 'ज्ञानमात्राभिमानिनः,ज्ञानमेव सारमित्यभिमानिनः-ज्ञानलवदुर्विदग्धाः-वयमेव सर्वज्ञा इति मिथ्याभिमानिनः-वस्तुतोऽज्ञानभावनिश्चयवन्तः, ते-आत्मानः, 'भ्रष्टा ज्ञानकर्मभ्यां ज्ञानतोऽपि भ्रष्टाः कर्मतोऽपि भ्रष्टा उभयतोऽपि भ्रष्टाः, भ्रष्टज्ञाना भ्रष्टकर्माणश्च नीरतीरभ्रष्टहस्तिवदतो भ्रष्टास्ततो भ्रष्टा भवन्ति,अत एव ।

॥१५६॥

नास्तिका-नास्ति ज्ञानं, नास्ति क्रिया, न स्तो ज्ञानकर्मणी, साध्यसिद्धावर्थादात्मपरमात्मपरलोक-पुण्यपापसद्गतिदुर्गति-शिवगत्यादिविषयकास्तिक्यरहिताः, नास्तिका एव नात्र संशय इति ॥३८॥

**दम्भेन पूर्णज्ञान निर्दोषताऽडम्बरेण नास्तिकै र्जगद् वञ्च्यते—**

**ज्ञानोत्पत्तिं समुद्भाव्य, कामादीनन्यदृष्टितः ।**
**अपह्नुवानै र्लोकेभ्यो, नास्तिकै र्वञ्चितं जगत् ॥३९॥**

स्वाऽऽत्मनि 'ज्ञानोत्पत्तिं समुद्भाव्य' ज्ञानं-पूर्णज्ञानमुत्पन्नमेवेति, अविद्यमानमपि विद्यमानत्वेनोद्भावनं–प्रकटनं कृत्वा, पूर्णज्ञानिनः कथं कामादिदोषवन्त इति दम्भगर्भितवाक्योच्चारद्वाराऽन्येषां दृष्टिपथं दोषा नानयेयुरिति दम्भनीतितः, लोकेभ्यो-मुग्धलोकेभ्यः कामादीन्-कामाज्ञानक्रोधलोभभयहास्यरागादिदोषान्, अन्यदृष्टौ धूलिप्रक्षेपं कृत्वाऽपह्नुवानैः-दम्भतोऽपह्नवं-उपरिस्थगनक्रियां कुर्वाणै र्नास्तिकैर्वञ्चितं जगत् यथा मायिकै र्धूर्तैः कश्चिद् इन्द्रजालादिकं दर्शयित्वा वञ्च्यते-धनादिस्वर्णादिकं गृहीत्वा धनादिरहितः क्रियते तथाऽत्रापि क्रियाज्ञानरहितं जगत् कृत्वा मिथ्यात्वकूपे क्षिप्त्वा ज्ञानक्रियारूपधर्मश्रद्धाधनरहितं नास्तिकै र्जगत् क्रियते इति ॥३९॥

**ज्ञानस्य परिपाकजन्यक्रियाऽसङ्गक्रिया भवति—**

ज्ञानस्य परिपाकाद्धि, क्रियाऽसङ्गत्वमङ्गति ।
न तु प्रयाति पार्थक्यं, चन्दनादिव सौरभम् ॥४०॥

निर्विकल्पो=निर्विषयो यः सदाऽऽत्मशुद्धस्वभावालम्बनरूपो ज्ञानपरिपाकः स शमः-समतायोगःकथ्यते शमनामकविशिष्टसमतायोगरूपज्ञानपरिपाकप्रयुक्ता क्रियाऽसङ्गत्वमङ्गति या क्रिया-ज्ञानादिकाराधनाऽभ्यासातिशयाद् यदाऽऽत्माऽभिन्ना-आत्मतादात्म्यावच्छिन्ना भवति सा क्रियाऽसङ्गत्वं-रागादिसङ्गशून्यसहजदशां प्राप्नोति-साऽसङ्गक्रिया सम्रुच्यते यथेत्युदाहरणे यथा चन्दनाच्चन्दनतः सौरभं-स्वसुगन्धिता पार्थक्यं-पृथक्त्वं, प्रयाति-प्रकर्षेण न याति-गच्छति, अर्थाच्चन्दनाऽभिन्नं सौरभं-चन्दनेन सह तादात्म्यसम्बन्धेन सदा तिष्ठति, तथा शमनामकज्ञानपरिपाकाऽभिन्नाऽसङ्गक्रिया भवति, ज्ञानपरिपाकेन-पूर्णज्ञानेन सह तादात्म्यसम्बन्धेनावच्छिन्नाऽसङ्गक्रियाऽस्ति 'प्रीतिभक्तिरूपानुष्टानानन्तरं जिनेश्वरदेवप्रणीतवचनानुसारि–पुरुषार्थकरणप्रवणो महात्मा, जिनवचनश्रवणयुक्तवास्तविकपरिपक्वज्ञानेन सह सर्वत्रोचितप्रवृत्तिकारको महापुरुषः, असङ्गक्रियया सह सङ्गच्छतेऽत्र ज्ञानक्रियाभेदाभावरूपोऽभेद ऐकात्म्यं भवति, असङ्गानुष्ठानभूमिकायां भावरूपक्रिया, शुद्धोपयोगश्च, शुद्धवीर्योल्लासश्चेत्येतत् त्रयं, तादात्म्य-अभेदसंबन्धेनावच्छिन्नं भवति, क्रियोपयोगवीर्योल्लासानां त्रयाणां तादात्म्यन योगिनः सहजानन्दामृतरसजन्यपरमतृप्तिमनुभवन्तीति' ॥४०॥ ॥१५८॥

प्रीत्यादिभेदैरनुष्ठानं चतुर्विधं गीतं दर्शनान्तरीययोगि-
भिस्तत्सर्वमित्थं युज्यते—

प्रीतिभक्ति-वचोऽसङ्गै-रनुष्ठानं चतुर्विधम् ।
यत्परै र्योगिभि गीतं, तदित्थं युज्यतेऽखिलम् ॥४१॥

प्रीतिनामकमनुष्ठानं, भक्तिनामकमनुष्ठानं, वचोनामकमनुष्ठानं, चाऽसङ्गनामकमनुष्ठानमेवं चतुर्भिः प्रकारैरनुष्ठानं यद् दर्शनाऽन्तरीयैः-परै र्योगिभिर्गीतं कथितमस्ति, तदखिलं-सर्वमित्थमेवं युज्यते-युक्तं भवति, अत्र सदनुष्ठानस्य चत्वारःप्रकाराःश्रीषोडशकप्रकरणे श्रीमद् हरिभद्रसूरीश्वरैर्दर्शितास्तथा श्रीयोगविंशि-का-ग्रन्थे टीकायां श्रीमन्महोपाध्याय-श्री यशोविजयगणिवरैरपि चतुर्णामनुष्ठानानां स्पष्टं वर्णनं कृतमस्ति,

(१) प्रीतियोगनामकसदनुष्ठानं=सदनुष्ठानत्वेन तद्दर्शकसद्गुरुभगवज्जिनेश्वरादीन् प्रति परमादरपूर्वक-परम-प्रीतिः,प्रयत्नाऽतिशयश्च[2] तथा शेषत्यागेन[3] च यत्क्रियते तत् प्रीत्यनुष्ठानम् ,

(२) भक्तियोगनामकसदनुष्ठानम्—यत्र पूर्वोक्तवस्तु-त्रयं वर्त्तते परन्तु आलम्बनीयमाश्रित्य भेदोऽस्ति, भक्त्यनुष्ठाने, आलम्बनीये विशिष्ट-पूज्यताबुद्धिरुत्पद्यते ततःप्रवृत्तिर्विशुद्धतरा भवति,

"अत्यन्तवल्लभा खलु पत्नी तद्वद्धिता च जननीति ।
तुल्यमपि कृत्यमनयो र्ज्ञातं स्यात् प्रीतिभक्तिगतं ॥ "(योगविं.)

"गौरवविशेषयोगाद् बुद्धिमतो यद् विशुद्धतरयोगम् ।
क्रिययेतरतुल्यमपि ज्ञेयं तद् भक्त्यनुष्ठानं" (दशम षो,)

(३) वचोयोगनामकसदनुष्ठानम्=शास्त्रार्थप्रतिसन्धानपूर्वा साधोःसर्वत्रौचित-प्रवृत्तिः (योग विं.) "वचनाऽऽत्मिकप्रवृत्तिः सर्वत्रौचित्ययोगतो या तु वचनानुष्ठानमिदं चारित्रवतो नियोगेन" श्रीषोड. योगदृष्टिसमुच्चये शास्त्रयोगः कथ्यते,

(४) असङ्गयोगनामक-सदनुष्ठानम्=चिरकालपर्यन्तं जिनवचांसि मनसिकृत्यानुष्ठातु महात्मनो जीवने ज्ञानाद्याराधनाऽऽत्ममादेकरसोभावमापन्ना यथा चन्दनात् सौरभं भवति तदा सहजरूपाऽसङ्गानुष्ठानं ।

"यत्त्वभ्यासातिशयात् सात्मीभूतमिव चेष्ट्यते सद्भिः ।
तदसङ्गानुष्ठानं भवति त्वेतत्तदावेधात् ॥"(दशम षो.)

'अभ्युदयफले चाद्ये निःश्रेयस-साधने तथा चरमे' (षो.)

'अर्थाऽऽलम्बनयो श्चैत्यवन्दनादौ विभावनम् । श्रेयसे योगिनःस्थानवर्णयो र्यत्न एव च' ॥
'प्रीतिभक्तिवचोऽसङ्गैःस्थानाद्यपि चतुर्विधम् । तस्मादयोगयोगाप्ते र्मोक्षयोगःक्रमाद् भवेत् ॥'

अत्र स्थान-वर्णार्थालंबनानालम्बनादि ध्येयमिति (ज्ञानसारे) ॥४१॥

परमपदप्रयाणे ज्ञानक्रिययोर्युगपत्स्वीकारः—

ज्ञाने चैव क्रियायां च, युगपद्विहितादरः ।
द्रव्य-भावविशुद्धःसन्, प्रयात्येव परं पदम् ॥४२॥

'ज्ञाने चैवेति'-संप्राप्तकेवलज्ञाने च योगनिरोधाख्यक्रियायां च 'युगपत्' एकसमयावच्छेदेन न तु द्वितीयसमयस्तत्र तथा न तु क्रमेण-प्राक्ज्ञाने पश्चात् क्रियायां चेति विहितादरः-परमादरपूर्वकस्वीकारकारी द्रव्यभाव-विशुद्धःसन् द्रव्ये च भावे च विशुद्धः-विशुद्धकेवलज्ञानादिसिद्धत्वपर्यायविशुद्धचेतनादिसकल-गुणविशिष्टद्रव्यरूपात्मनि च क्षायिकेऽतएव विशुद्धभावे सति आत्मद्रव्यमपि विशुद्धं भाव्यं, तद्भावोऽपि विशुद्धो भाव्यः,भावस्यार्थोऽत्र स्वरूपवाचकोऽस्ति सर्वथा सर्वदा स्वरूपस्वरूपवतो विशुद्ध्यैव परमपदप्राप्ति-रस्तीति तत्र परमपदप्रयाण-समयेऽपि युगपज्ज्ञानक्रियास्वीकारो वाच्यो द्रव्यभावविशुद्धि र्वाच्येति ॥४२॥

उपसंहारे विशिष्टमहामंगलरूपमुनीन्द्राणां श्लोकद्वयं गीयते (भुजंगप्रयातम्)—

क्रिया-ज्ञान-संयोग-विश्रान्त-चित्ताः, समुद्भूतनिर्बाध-चारित्रवृत्ताः ।
नयोन्मेषनिर्णीतनिःशेषभावास्तपःशक्तिलब्धप्रसिद्धप्रभावाः ॥४३॥

भयक्रोधमायामदाज्ञान निद्राप्रमादोज्झिताः शुद्धमुद्रा मुनीन्द्राः ।
यशःश्रीसमालिङ्गिता वादिदन्तिस्मयोच्छेदहर्यक्षतुल्या जयन्ति ॥४४॥

'मुनीन्द्रा जयन्ति'=कीदृशा मुनीन्द्राः ? इत्याह 'क्रियाज्ञानसंयोगविश्रान्तचित्ताः'-क्रिया च ज्ञानं च क्रियाज्ञाने तयोः, संयोगे-समन्वये, विश्रान्तं-विश्रान्तिकारि चित्तं-मानसं येषां ते 'क्रियाज्ञानसंयोगविश्रान्तचित्ताः' पुनःकी.मुनीन्द्राः ? इत्याह 'समुद्भूतनिर्बाधचारित्रवृत्ताः' तत एव सञ्जातं यद् निर्बाधं-बाधारहितं प्रतिबन्धकरहितमुच्चतमं चारित्रं संयमविशेषस्तेन वृत्ताः-छत्रायिताः-समलंकृता इत्यर्थः पुनःकी. मुनीन्द्राः ? इत्याह 'नयोन्मेषनिर्णीत-निःशेषभावाः' नयानां पूर्णविकासरूपोन्मेषेण निर्णीताः-निर्णयपथं-प्रमाणपथमानीता निःशेषाः समस्ता भावाः-पदार्था यैस्तेः, पुनःकी. मुनीन्द्राः ? इत्याह, 'तपःशक्तिलब्धप्रसिद्धप्रभावाः'-विशिष्टतपसः, शक्तितोबलेन लब्धः, अत एव प्रसिद्धः-प्रसिद्धिं प्राप्तः प्रभावो-माहात्म्यं-महिमा येषां ते, पुनःकी. मुनीन्द्राः ? इत्याह-भयक्रोधमायामदाज्ञाननिद्राप्रमादोज्झिताः-भयं च क्रोधश्च माया च मदाश्चाज्ञानं च निद्रा च प्रमादश्चेत्याख्या ये दोषास्तैरुज्झिताः-रहिताः, पु. की. मु. ? इत्याह-'शुद्धमुद्राः' प्रसन्नवदना अत एव निर्मलमर्यादाशोभिता इत्यर्थः,पु.की.मु. ? इत्याह-'वादिदन्तिस्मयोच्छेदहर्यक्षतुल्याः' वादिन एव दन्तिनो-हस्तिनस्तेषां यः स्मयो गुणाभिमानजन्यगुरुत्वं, तस्योच्छेदे-

सर्वथा विनाशे हर्यक्षेण-सिंहेन तुल्या-समाना इत्यर्थः, पुं की मुनीन्द्राः सन्तो जयन्ति ! इत्याह यशः श्रीसमालिङ्गिता जयन्ति-(कर्त्तुर्नामापि ज्ञेयं)यशः-सर्वदिग्गामियशः-कीर्तिरूपलक्ष्मीतः सम्यग् आलिङ्गिताः-आश्लेषयुक्ता मुनीन्द्रा जयन्ति-सर्वोत्कर्षेण वर्त्तन्ते अर्थात् पूर्वोक्तसर्वविशेषणविशिष्टा मुनीन्द्रा जयन्ति जगत्यां इति. ॥४३॥४४॥

इति श्री पण्डितनयविजयगणिशिष्यपण्डितपद्मविजयगणिसहोदरोपाध्यायश्रीयशोविजयगणिविरचितेऽध्यात्मोपनिषत्प्रकरणे क्रियायोगनामा तृतीयोऽधिकारः समाप्तः ।

इति-आचार्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधरविजयभुवनतिलकसूरीश्वरपट्टधरविजयभद्रंकरसूरिणाऽध्यात्मोपनिषत्प्रकरणे रचितायां भुवनतिलकाख्यायां टीकायां क्रियायोगनामा तृतीयोऽधिकारःसमाप्तः ।



# अथ चतुर्थःसाम्ययोगशुद्धिनामा-धिकारः—

ज्ञाननामकक्रियानामकघोटकद्वययुक्तसाम्यरथा-
धिरूढःशिवमार्गगामी भवति— (उपजातिः)

ज्ञानक्रियाऽश्वद्वययुक्त-साम्य-रथाधिरूढः शिवमार्गगामी ।
न ग्रामपूःकराटकजारतीनां जनोऽनुपानत्क इवार्त्तिमेति ? ॥१॥

ज्ञानं च क्रिया च ज्ञानक्रिये, ते एवाश्वद्वयं घोटक-द्वितयं तेन युक्तो यः साम्यनामको रथस्तत्राधिरूढः-आसीनः साम्ययोगी, शिवमार्गगामी-सम्यग्दर्शनज्ञान—चारित्रात्मकमोक्षमार्गं प्रति गमनशीलो भवति, इव-यथा जनो-मनुष्यः,अनुपानत्कःपादत्राणरहितः,'ग्रामपूःकण्टकजारतीनां नाऽर्तिमेति ? ग्रामनगरगतकण्टक-जन्यानामरतीनां-स्वस्थतारहितानां व्याकुलतानामर्ति-पीडामेति नेति ? अर्थादार्तिमेत्येव अनुपानत्कः,तथाऽविघ्नेन-ससुखं ज्ञानक्रियामहितसमतारथारूढः साम्ययोगी शिवमार्गगामी सन्-शिवंगमी भवतीति ॥१॥

लोकोत्तरं साम्यमुपैति योगी—

आत्मप्रवृत्तावतिजागरूकः, परप्रवृत्तौ बधिरान्धमूकः ।
सदा चिदानन्दपदोपयोगी, लोकोत्तरं साम्यमुपैति योगी ॥२॥

'लोकोत्तरं साम्यमुपैति योगी' ज्ञानक्रियायोगी, अपूर्वमद्भुतं साम्यं–समभावं प्राप्नोति. कीदृशो योगी ? इत्याह 'आत्मप्रवृत्तावतिजागरूकः' स्वहितकारिसमस्तक्रियायामत्यन्ता-प्रमत्तः, पुनः की योगी ? इत्याह 'परप्रवृत्तौ बधिरान्धमूकः' स्वात्मभिन्नभौतिकपौद्गलिकक्रियाविषये बधिर इव पौद्गलिक-शब्दादिकं न शृणोति, अन्ध इव पौद्गलिकरूपं पश्यत्यपि न पश्यति, मूक इव मौनं धारयति पौद्गलिक-रागादिवर्धकवचनोच्चारं न करोत्येव ।

पुनः की योगी ? इत्याह 'सदा चिदानन्दपदोपयोगी' निरन्तरं-प्रतिसमयं केवलज्ञानानन्तानन्द-पदरूप आत्मनि निर्वाणे वा उपयोगः–ध्यानं–विशिष्टं मनः तेन विशिष्ट-उपयोगी ।

एतादृशविशेषणत्रयविशिष्टो ज्ञानक्रियायोगी लोकोत्तरं विशिष्टममुकगुणस्थानगतसमताभावं प्राप्नोतीत्यर्थः ॥२॥

साम्ययोगी परिषहोपसर्गाभ्यां निश्चलो भवति—

परीषहैश्च प्रबलोपसर्ग–योगाच्चलत्येव न साम्ययुक्तः ।
स्थैर्याद् विपर्यासमुपैति जातु, क्षमा न शैलै र्न च सिन्धुनाथैः ॥३॥

'परीषहैश्च' स्वकर्मजन्यान्तरिक-क्षुत्परीषहादिद्वाविंशतिपरीषहैश्च 'प्रबलोपसर्गयोगात्' देवादिपर-नाहकृतप्रबलोपसर्गाणामुपद्रवानामुत्पातानां योगात्–सम्बन्धात् , न साम्ययोगी चलत्येव ।

यथा क्षमा–स्थिराऽचलत्वात् पृथ्वी, (क्रोधाभावरूपक्षमा,) जातु-कदाचित् शैलैः–स्वाधारपर्वतै गुरूच-भूतैः भयङ्करै र्न स्थैर्याद् विपर्यासमस्थिरतामुपैति, जातु-कदाचित् , 'सिन्धुनाथैः' सिन्धूनां–नदीनां नाथैः स्वाधेय–विशाललम्बायमानै भयावहैः सागरैश्च न स्थैर्याद् विपर्यासमस्थिरतामुपैति ॥३॥

**कल्याणसिद्धे र्न तदा विलम्बः—**

इतस्ततो नारतिवह्नियोगा–दुड्डीय गच्छेद्यदि चित्तसूतः ।
साम्यैकसिद्धौषधमूर्च्छितः सन् , कल्याणसिद्धे र्न तदा विलम्बः ॥४॥

'चित्तसूतः'=मनोनामकः सूतः (सूते हेमायुषी सूतः) पारदः (रसविशेषः) यदि 'नारतिवह्नियोगा-दुड्डीय इतस्ततो गच्छेद्'=अरति-अस्वस्थताजन्यव्याकुलतारूपचञ्चलतानामक-महानलस्य सम्बन्धादुड्डयनं कृत्वाऽस्मात्स्थानादनिश्चितावकाशं प्रति न गच्छेद्–गमनं कुर्यात् वा-न नश्येत् , तदा-तस्मिन् काले कीदृशः चित्तसूतः सन् कल्याणसिद्धे र्न तदा विलम्बः ? इत्याह—'साम्यैकसिद्धौषधमूर्च्छितः सन्'=सिद्धं तत्तच्छास्त्र-विहित-षोडशसंस्कारादिर्विधिना सिद्धियुक्तं यदौषधं-औषधीसमुदायरूपं, औषधिरेवौषधं भैषज्यविशेषो वा तेन मूर्च्छितः-प्रलीयते क्रियाऽत्र प्रलयो-मूर्च्छा-अचेष्टता (गतचपलत्वरूपचेतनत्वं) तेन युतः-मारित इत्यर्थः, समतानामैकैकसिद्धौषधमूर्च्छितः-स्ववशीकृतो यदि चित्तनामकपारदस्तदा 'कल्याणसिद्धेः'

॥१६६॥

कल्याणस्य-स्वर्णस्य, निर्वाणस्य वा सिद्धेः प्राप्ते र्न विलम्बः-कालक्षेपः, ततोऽव्यवहितकल्याणसिद्धिरेवेति निश्चय इति ॥४॥

**समताद्याः सुखसागरान्तर्निमग्नता कार्या—**

अन्तर्निमग्नः समतासुखाब्धौ, बाह्ये सुखे नो रतिमेति योगी ।
अटत्यटव्यां क इवार्थ-लुब्धो गृहे समुत्सर्पति कल्पवृक्षे ॥५॥

'समतासुखाब्धौ अन्तर्निमग्नः'=समतागुणजनित-(समतानामक)-सुखसागरान्तर्निमग्नः-नितरां मग्नः, बाह्ये-आत्मतो बाह्ये-पौद्गलिककर्मजनिते क्षयि-भौतिकदिव्यादिके सुखे-आनन्दे, योगी साम्ययोगी नो रतिं-रुचिं-रागमेति-प्राप्नोति, यथा स्वकीयगृहे वर्धमानेऽतो विद्यमाने कल्पवृक्षे सति कः मौर्ख्यमण्डितोऽपूर्वो जडः, अर्थलुब्धो—धनान्वित-धीः अटव्यामरण्यान्यामटति ? नो कोऽपि मूर्खोऽपि कल्पवृक्षज्ञानानन्तरं बंभ्रमीतीत्यर्थः ॥५॥

**यत्राऽविद्याजन्यभ्रान्तिशान्तिर्भवति तत्र विशिष्टसाम्ये रमणता कार्या—**

यस्मिन्नविद्यार्पितबाह्यवस्तु—विस्तारजभ्रान्तिरुपैति शान्तिम् ।
तस्मिंश्चिदेकार्णवनिस्तरङ्ग-स्वभावसाम्ये रमते सुबुद्धिः ॥६॥

'यस्मिन्निति' यस्मिन् स्वात्मस्वभावसाम्ये, अतत्त्वधीरूपाऽविद्यया-अज्ञानेन, अर्पिता-तत्त्वरूपेण उत्पादिता-उत्थापिता, बाह्यवस्तुविस्तारजन्यभ्रान्तिः=इदं वस्तुजातं तत्त्वमिति, अतत्त्ववस्तुजाते तत्त्वबुद्धिः, 'शान्तिमुपैति'-शान्ता-उपशान्ता वा क्षीणा भवति, तस्मिन् 'चिदेकार्णवनिस्तरङ्गस्वभावसाम्ये'=अविद्योपशामके तस्मिन्, चिद्-विज्ञानामकाद्वैतसागरगत-जातनिस्तरङ्ग अत्यन्तस्तिमितस्थिरस्वभावरूपसाम्ये, रमते सुबुद्धिः'-सम्यग्ज्ञानयोगी रममाणो भवति-वर्त्तते इति ॥६॥

शुद्धात्मतत्त्वानुकूलविमर्शजन्यान्यबुद्धिनिवृत्तिस्ततः समत्व-प्रथनम्—

शुद्धात्मतत्त्वप्रगुणा विमर्शाः, स्पर्शाख्यसंवेदनमादधानाः ।
यदाऽन्यबुद्धिं विनिवर्त्तयन्ति, तदा समत्वं प्रथतेऽवशिष्टम् ॥७॥

'शुद्धात्मतत्त्वप्रगुणा विमर्शाः'-शुद्धमात्मतत्त्वं प्रति प्रगुणाः-ऋजवः-अकुटिला-अनुकूलाः (शुद्धात्मतत्त्वस्य प्रकृष्टा गुणाः जनकत्वेन येषु ते) विमर्शाः-प्रमाणनिर्णयात्मका विचाराः (विशिष्टतर्काः, ध्यानविशेषाः, आलोचनविशेषाः, सम्यक्त्वज्ञानचारित्रशोधकविचाराः) किं विशिष्टा विमर्शाः ? इत्याह 'स्पर्शाख्यसंवेदनमादधानाः' आत्मस्पर्शनामकस्वसंवेदनं-स्वानुभवं आ-समन्ताद् दधानाः-धारयन्तः, अर्थाद् आत्मस्पृष्टा-स्वसंविदिताः-स्वानुभूताः शुद्धात्मतत्त्वप्रगुणत्वविशिष्टा विमर्शाः (महासिद्धान्ता आदर्श-

भूताः) ते विमर्शाः किं कुर्वन्ति ? ततः समत्वं प्रथते वा नवेति शङ्कायामाह—'यदाऽन्यबुद्धिं विनिवर्त्तयन्ति, तदा समत्वं प्रथतेऽवशिष्टम्'=यस्मिन् काले शुद्धात्मतत्त्वादन्यवस्तुजाते इदं तत्त्वमिति बुद्धिं अतत्त्वबुद्धिं (अथवा स्वात्मतत्त्वेनाहमात्माऽपि तु जड इति परबुद्धिं अविद्याजन्यां चेतनेऽचेतनबुद्धिं) पूर्वोक्ता विमर्शाः-प्रकृष्टपरामर्शा विनिवर्त्तयन्ति-विनिवृत्तिं कारयन्ति विनाशयन्तीत्यर्थः, विमर्शकार्यमन्यबुद्धिनिवर्त्तनं. ततोऽवशिष्टं कार्यं समत्वं स्वयमेव तदा-तस्मिन् काले निरुक्तविमर्शद्वाराऽन्यबुद्धिनिवर्त्तनकार्यानन्तरमवशिष्टं शेषरूपं कार्यं समत्वं—समता, स्वयमेव ( प्रथते बाधकाभावादुद्बोधकसद्भावात् ) प्रथते-प्रथनं-विस्तारं प्राप्नोतीत्यर्थः ॥७॥

**समत्वं विना सामायिकं कथं न ?—**

**विना समत्वं प्रसरन्ममत्वं, सामायिकं मायिकमेव मन्ये ।**
**आये समानां सति सद्गुणानां शुद्धं हि तच्छुद्धनया विदन्ति ॥८॥**

'विना समत्वं प्रसरन्ममत्वं सामायिकं मायिकमेव मन्ये' इति=यत्र समत्वं नास्ति ममत्वमस्ति, समत्वं विहाय वृद्धिभावं प्राप्नुवन्ममत्वं विद्यते, एतादृशं सामायिकं—सामायिकनामकं विशिष्टमावश्यक अथवा तन्नामिका क्रिया, मायिकमेव मन्ये—एतद्ग्रन्थकारः कथयति, दाम्भिकमेवाऽहं मन्ये—ममाभिप्रायः,

तत्कथमिति चेद् इत्याह-'आये समानां सति सद्गुणानां, शुद्धं हि तच्छुद्धनया वि(व)दन्ति'=व्युत्पत्ति-पक्षापेक्षया, सम+आयः, तदेव सामायिकमिति व्युत्पत्त्या, 'समानां सद्गुणानां आये सति' (निर्वाणभिन्न संसारकार्यकारित्वेन विषमास्तेषामभावेन समाः) अत्र समशब्दस्य समस्तार्थस्य करणे समः, सर्वादित्वेन समेषामिति भवेत् , एकनिर्वाणकार्यकारित्वेन समाः-समानाः, सद्गुणाः-सम्यग्दर्शनज्ञानचारित्राद्याः क्षायोपशमिकक्षायिकभावापन्नाः, (सद्-आत्मगुणाः) तेषामर्थात् समानां सद्गुणानामाये लाभे सति हि किल, तत् सामायिकं शुद्धं निर्मायिकं, शुद्धनया-एवम्भूताद्या वि(व) दन्ति=जानन्ति कथयन्ति वेत्यर्थः ॥८॥

कस्मिन् प्रकाशे परमात्मतत्त्वं विद्योतते ? इति प्रश्ने प्रत्याह-

निशानभो—मन्दिररत्नदीप्र-ज्योतिर्भिरुद्द्योतितपूर्वमन्तः ।
विद्योतते तत्परमात्मतत्त्वं, प्रसृत्वरे साम्यमणिप्रकाशे ॥९॥

निशानभोमन्दिररत्नेति, निशारत्नस्य चन्द्रस्य- च नभोरत्नस्य-सूर्यस्य च मन्दिररत्नस्य दीपस्य च दीप्रैः देदीप्यमानैर्ज्योतिर्भिः-(द्योतते ज्योतिः क्लीबलिङ्गे "द्युतेरादेश्चज.") रोचिर्भिः-किरणैः,'उद्द्योतितपूर्वमन्तः'=पूर्वमुद्द्योतितोऽन्तः-(सीमा, पदार्थानां निर्णयोऽन्तिमभागो वा) पूर्वमुद्द्योतितमन्तः-करणानामन्तर्गतं मन आत्मा वा, अन्तरात्मा वा, पदार्थानामन्तर्मध्यभागो वा अन्तस्तत्त्वं-परमात्मतत्त्वमित्यर्थः । 

बाह्यप्रकाशकैःपूर्वं यत् परमातत्त्वद्योतने प्रयत्नःकृतस्तन्निष्फलतायां सत्यां 'विद्योतते तत्परमात्मतत्त्वम्, प्रसृत्वरे साम्यमणिप्रकाशे'=साम्यनामकनित्यमणिप्रकाशे प्रसृत्वरे-प्रकर्षेण सरतीत्येवं शीले-प्रसारिणि सति तदन्तः स्वरूपं परमात्मतत्त्वं स्वयमेव विद्योतते-प्रकाशते इत्यर्थः ॥९॥

एकविवेकगर्भितविकसितसमताऽऽदरणीया भरतादिभूपेन्द्रवत्—

एकां विवेकाङ्कुरितां श्रिता यां, निर्वाणमापुर्भरतादिभूपाः ।
सैवर्जुमार्गःसमता मुनीना-मन्यस्तु तस्या निखिलः प्रपञ्चः ॥१०॥

'एकां-अद्वैतां विवेकाङ्कुरितां विवेकनामकांकुरजनितां-विवेकेनोत्तेजितां प्रफुल्लां-यां-समतां श्रिताः-श्रितवन्तः 'भरतादि-भूपा 'निर्वाणमापुः' भरत आदौ येषां ते भरतादिभूपाः-भरतादिचक्रवर्त्तिप्रमुखा भूपाः उपलक्षणतो भूपभिन्ना अपि केचिज्ज्ञेयाः, निर्वाणं मुक्तिं कृत्स्नकर्मक्षयजन्यं निःश्रेयसं 'आपुः'-प्राप्तवन्तोऽभूवन्, सा एव समता मुनीनां-जगत्त्रयस्वरूपज्ञानिनां ऋजुमार्गःसरलःपन्थाः—अकुटिलमार्गः निष्कण्टको राजमार्गः, 'अन्यस्तु तस्या निखिलःप्रपञ्चः'समताभिन्नो द्वितीयः-साधनाविशेषप्रकारप्रपञ्चस्तु समता-समृद्धिवृद्धये भवतीत्यर्थः, समतारूपमुख्यलक्ष्यं कृत्वा धर्मविषयकाराधना—प्रकार—प्रपञ्चो वर्त्तते सफल इत्यर्थः ॥१०॥

॥१७१॥

**भवभीतोऽल्पीयस्यपि कषायाऽग्नौ न विश्वासमुपैति भीतः—**

अल्पेऽपि साधुर्न कषायवह्ना-वह्नाय विश्वासमुपैति भीतः।
प्रवर्धमानः स दहेद् गुणौघं, साम्याम्बुपूरै र्यदि नाऽपनीतः ॥११॥

'अल्पेऽपि माधुर्न कषायवह्नावह्नाय विश्वासमुपैति भीतः' इति भीतः-भवभीतोऽत एव कषायभीतः माधुर्मनिः, 'अल्पेपि कषायवह्नौ अह्नाय' कषायवह्निमल्पमपि प्रति अह्नाय-मत्वरं विश्वासमुपैति न, यदि समतानामकैर्जलपूरैः-जलप्रवाहवृद्धितःस कषायवह्निरल्पोऽपि नापनीतः-न विध्यापितः, तदा प्रवर्धमानः स कषायवह्निरल्पोऽपि दहेद्-ज्वालयेत् गुणौघं-गुणपुञ्जं अर्थादशान्तोऽल्पोऽपि कषायवह्निर्न विश्वसनीयः, यतः आन्तरशत्रवः सर्वेऽपि स्वल्पानल्पभेदं विना छलान्वेषिणः-छलमन्विष्य पातनकार्यकरणकर्मठा भवन्ति, अतः मत्वरं स्वात्मसदनतो निष्काशनीयाः ॥११॥

**प्रारब्धजन्यकषाया आभासिका ज्ञानिनामिति मतस्य खण्डनम्—**

प्रारब्धजा ज्ञानवतां कषायाः, आभासिका इत्यभिमानमात्रम् ।
नाशो (श्यो)हि भावः प्रतिसङ्ख्यया यो, नाबोधवत्साम्यरतौ स तिष्ठेत् ॥१२॥

'प्रारब्धजाः'प्रारब्धकर्मजाताः-ज्ञ-ना ाश्यभोगादिक्रियानाश्यनिकाचित्तकर्मजाताः कषाया ज्ञानवतां-

ज्ञानयोगिनां, आभासिका-यथा ग्रीष्मे सिकतास्वर्ककराःप्रतिफलिता जलत्वेनाभान्ति, सिकतास्वर्ककरा जलत्वेनाभासन्ते सिकतास्थार्ककराः, जलाभासाः, असज्जलेषु जलबुद्धिराभासरूपा, आभासा एव आभासिका उच्यन्ते, कषाया न सन्ति, अपि तु कषायवदाभासन्ते यथा हेत्वाभासा हेतुवदाभासन्ते, हेत्वाभासा दुष्ट-हेतवोऽथवा हेतुदोषाः, वस्तुतस्तु कषाया न सन्ति, अपितु कषायाभासाः कषायवदाभासन्ते अत एव आभासिकाः कषायाः, प्रारब्धजन्यज्ञानिनिष्ठकषायनाशो न ज्ञानजन्योऽतः कषाया वास्तविका न त्वा-भासिका यदि तत्र कषाया आभासिका इति कथनमभिमानमात्रमेव मन्तव्यम् ।

''नाश्यो हि भावः प्रतिसंख्यया यो नाबोधवत् साम्यरतौ स तिष्ठेदिति' यः प्रतिसंख्यया कषाय-विरोधिसमतया कषायभावो नाशयोग्यो भवति । यथाऽबोधः-अज्ञानं प्रतिसंख्यारूपेण ज्ञानेन नाश्यस्तथा साम्यरतौ मुनौ स कषायभावो न तिष्ठेदिति''

तथा च 'नाशो हि भावः प्रतिसंख्यया यो' हि-किल, प्रतिसंख्या-परस्परविरोधित्वरूपा, तया, यः कषायनाशविरोधिकषायभावः, कषायभावविरोधिकषायनाशः ''न आभासिका अबोधवत् साम्यरतौ स तिष्ठेत्''=यथा बोधभावविरोधिबोधनाशः, बोधनाशविरोधिबोधभावः, प्रतिसंख्यया आभासिका-बोधः नैकत्र तिष्ठेत्तथा साम्यरतौ मुनौ प्रतिसंख्यानीत्या आभासिककषायः अर्थात् स कषायनाशः, तद् विरोधि-आभासिककषायभाव एकोऽपि न तिष्ठेत् इत्यर्थः ॥१२॥

साम्य विना तपः क्रियादिः प्रतिष्ठानिष्ठाफलकः—

साम्यं विना यस्य तपः—क्रियादे—र्निष्ठाप्रतिष्ठाऽर्जनमात्र एव ।
स्वर्धेनु-चिन्तामणिकामकुम्भान् , करोत्यसौ काण-कपर्दमूल्यान् ॥१३॥

'साम्यं विना यस्ये'त्यादि. समताभावं विना यस्य नरस्य 'तपःक्रियादेः' तपश्च दानादिका सर्वक्रिया च, तपः क्रिया-प्रभृतेः 'प्रतिष्ठार्जनमात्र एव निष्ठा' पूजाप्रतिष्ठाया अर्जनस्य प्राप्तिमात्रे-केवलप्राप्तौ एव निष्ठा-निर्वहणं समाप्ति भवति, असौ-एतादृशो नरः, कामधेनुचिन्तामणिकामकुम्भान्—महादिव्यानि दुर्लभानि वस्तूनि त्रीणि—काणकपर्दमदृशमूल्यमदृशमूल्यान् करोति. कामकुंभादिदिव्यवस्तूनि त्रीणि परममूल्यवन्ति सन्ति परन्तु मोहमूढतादिहेतुना काणकपर्दतुल्यानि मूल्यरहितानि विदधाति स महामूर्खः, तथैव साम्यं महामूल्यं वस्तु वर्त्तते तत्त्यक्त्वा, तद्रहिततपः-क्रियादिकमल्पमूल्यं करोति तत्र महामोह एव कारणं नान्यत् कारणं वर्तते, साम्यसहिततपःक्रियादिकः सकलकर्मनिष्ठां कृत्वा मोक्षप्रतिष्ठां करोत्येवेति ॥१३॥

विशिष्टसाधुनाऽप्यलभ्यगुणलाभः साम्यसमाधिनिष्ठया भवति—

ज्ञानी क्रियावान विरतस्तपस्वी, ध्यानी च मौनी स्थिरदर्शनश्च ।
साधुर्गुणं तं लभते न जातु, प्राप्नोति यं साम्यसमाधिनिष्ठः ॥१४॥

॥१७४॥

'ज्ञानी क्रियावानिति' ज्ञानमहितः, क्रियाविशिष्टः, विरतिमान , तपःपूतः, ध्यानमग्नः, मौनधारी, स्थिरसम्यग्दृष्टिः, एतादृश-सप्तविशेषणविशिष्टः, साधुर्यं गुणं-क्षपक-श्रेण्यादिगतगुणं न कदाचिल्लभते तं निरुक्तगुणं साम्यमहिम्ना जन्यसमाधिशुक्लध्यानादिगतसमाधिनिष्ठावान् साधुः प्राप्नोति–लभते इत्यर्थः ॥१४॥

**कोपहर्षप्रसंगे साम्यवतो दमदन्तभदन्तस्य स्तुतिः–**

दुर्योधनेनाऽभिहि (ह) तश्चुकोप, न पाण्डवैर्यो न नुतो जहर्ष ।
स्तुमो भदन्तं दमदन्तमन्तः–समत्ववन्तं मुनिसत्तमं तम् ॥१५॥

यो दमदन्तो मुनि दुर्योधनेन निन्दाऽऽक्रोश-गर्भित–विरुद्धशंसनात्मकैर्वचनैरभिहितः (दुर्योधनेन प्रस्तरादभितो हतोऽभिहतः)सन् न चुकोप-क्रोधवान्न बभूव,पाण्डवैःपाण्डुपुत्रै र्युधिष्ठिरप्रमुखैर्नु तः-स्तुतः-स्तुतिविषयीकृतः सन् न जहर्ष–न हर्षवान् बभूव, 'तं दमदन्तं भदन्तं अन्तः समत्ववन्तं मुनिसत्तमं स्तुमः'=मुनिषु अतिशयेन सत् तं–सत्तमं=मुनिसत्तमं अन्तर्मानसे ममतासुभगं=अन्तः समत्ववन्तं, भदन्तं-भगवन्तं स्तुमः=स्तुतिविषयीकुर्मः ॥१५॥

**नमिनामकराजर्षिणा साम्येन दिगन्तविश्रान्तं यशोऽर्जितम्—**

यो दह्यमानां मिथिलां निरीक्ष्य, शक्रेण नुन्नोऽपि नमिः पुरीं स्वाम् ।
न मेऽत्र किञ्चिज्ज्वलतीति मेने, साम्येन तेनोरुयशो वितेने ॥१६॥

यो-नमिराजर्षिः, प्रेरितोऽपि स्वां-स्वीयां पुरीं मिथिलां दह्यमानां-ज्वलन्तीं निरीक्ष्य शक्रेण नुन्नोऽपि-हे मिथिलापते ! युष्मन्नगरीं मिथिलां दह्यमानां विध्यापयित्वा पश्चान्मुनित्वं प्रतिपद्यस्वेति प्रेरितोऽपि, नमिः=हे शक्रेन्द्र ! न मेऽत्र किञ्चिज्ज्वलतीति, अत्र दह्यमानायां मिथिलायां सत्यां, सा मदन्या मिथिलाऽस्ति, ततोऽहमन्योऽस्मि यतोऽहमदाह्यो, मदीयं यत्तददाह्यं यद् दाह्यं न तन्मदीयं अतः कथ्यते न मे-मदीयं किञ्चिदपि वस्तु ज्वलतीति-यज्ज्वलति तन्न मदीयमिति, मेने मनुतेस्म-मन्वान-आसीत्तेन नमिना साम्ययोगद्वारोरु-विशालं यशो वितेने-वितन्यते स्म वितन्यमानमासीत् ॥१६॥

तिलपीलकयन्त्रनिष्पीडिता अपि स्कन्धकसूरिशिष्याः साम्येन मुक्तिं जग्मुः—

साम्यप्रसादाऽस्तवपुर्ममत्वाः, सत्त्वाधिकाः स्वं ध्रुवमेव मत्वा ।
न सेहिरेऽर्तिं किमु तीव्रयन्त्रनिष्पीडिताःस्कन्धकसूरिशिष्याः ॥१७॥

'साम्यप्रसादाऽस्तवपुर्ममत्वाः, सत्त्वाधिकाः स्कन्धकसूरिशिष्याः'=स्कन्धकनामकसूरेः शिष्याःपञ्चशतप्रमाणाःकीदृशाः शिष्याः ? इत्याह समताभावराजस्य प्रसादतोऽस्तं क्षिप्तं शरीरस्य ममत्वं येषां ते साम्यप्रसादाऽस्तवपुर्ममत्वाः, पु.की. इत्याह सत्त्वाधिकाः-अधिकं सत्त्वं-धैर्यं येषां ते सत्त्वाधिकाः,सत्त्वेनाधिका महान्तो वा, किं कृत्वा सत्त्वाधिकाः ? इत्याह स्वं ध्रुवमेव मत्वा=स्वमात्मानं ध्रुवमेव-शाश्वतमेव-सर्व-कालेनाचलममरमजरमच्छेद्यमदाह्यमशोष्यमप्लाव्यं स्वरूपतोऽनिष्पीडयमानं मत्वा, प्रकृष्टसत्त्वशालिनो भूत्वा, तीव्रयन्त्रनिष्पीडिताः तीव्र-कठिनतमविशाल-तिल-निष्पीडनयन्त्रे निष्पीडिताः पीलिताःसन्तः'किमु न सेहिरेऽर्तिं=किमु-किं यन्त्रपीलनजन्यामसह्यामर्तिं न सेहिरे-सोढवन्तः ? अपितु सेहिरे एव स्कन्धकशिष्याः सर्वे मुमुक्षवः-तितिक्षवो जाताः तादृशीं पीडां सहित्वा सर्व-कर्मक्षयं कृत्वा निर्वाणनगरीं गतवन्तः ॥१७॥

समतासमाधेर्मेतार्यमुने-र्लोकोत्तरचरित्रस्य वर्णनम् –

लोकोत्तरं चारुचरित्रमेत–न्मेतार्यसाधोःसमता–समाधेः ।
हृदाऽप्यकुप्यन्न यदार्द्र-चर्मबद्धेऽपि मूर्धन्ययमाप तापम् ॥१८॥

'समतासमाधेः' समतायां समाधिं (सम्यगाधीयते समाधिः, तदेव ध्यानमेवार्थमात्राभासनरूपं ध्येयाकार-निर्भासात्मकं ध्येयस्वभावावेशात्) यस्य स तस्य समतासमाधेः मेतार्यसाधोःसमतासमाधि

॥१७७॥

विशिष्टमेतार्यनामकमुनेः, लोकोत्तरमलौकिकं सुन्दरतमं चरित्रमेतदस्ति 'यदार्द्रचर्मबद्धेऽपि मूर्धनि अयम् तापमाप हृदा अपि अकुप्यन्न'=एतादृशं चरित्रमस्ति 'यत्' यच्चरित्रं कथ्यते, 'अयं–एष मेतार्यनामको मुनिः, क्लिन्नचर्मणाबद्धेऽपि मस्तके तापं-महतीं तपनतां आप-प्राप्तवानपि हृदाऽपि-मनसाऽपि नाकुप्यत्-न कोपवान् बभूवाऽपितु पराकाष्ठागतसमतां धारयन् कर्मक्षयं कृत्वा मोक्षस्थानमवाप ॥१८॥

**पश्य ! पश्य ! कृष्णवासुदेवानुजस्य गजसुकुमालस्य समतासुधासागरं—**

जज्वाल नान्तःश्वशु (श्वसु न) राधमेन प्रोज्ज्वालितेऽपि ज्वलनेन मौलौ ।
मौलिर्मुनीनां स न कैर्निषेव्यः, कृष्णानुजन्मा समताऽमृताब्धिः ॥१९॥

'श्वशुराधमेन (नराधमेन वेत्ति पाठान्तरे) प्रोज्ज्वालितेऽपि ज्वलनेन मौलौ' सोमिलनामकेन श्वशुराधमेन ज्वलनेन वह्निना प्रकर्षेणोज्ज्वालिते-मौलौ-मस्तकेऽपि सति 'नान्तर्जज्वाल' अन्तर्मानसे वात्मनि न जज्वाल कोपं कृत्वा न दग्धवान् यः स गजसुकुमालनामा कृष्णवासुदेवस्यानुजः-कनीयान् भ्राता, कीदृशः स ? इत्याह-'समताऽमृताऽब्धिः' समतानामकामृतपद्दायकामृतस्य सागरःकथमन्तर्ज्वलितवान् भवेत् ? यः समतामृतसागरो नो भवेत् सोऽन्तर्द्वेषेण ज्वलत्येव स गजसुकुमालो मुनि मुनीनां मौलिः-मुकुटरूपःकैर्न निषेव्यः ? अर्थात् सर्वैर्जनैर्नितरां सेव्य एवेति ॥१९॥

**अन्निकापुत्रस्य साम्येन दिव्योपसर्गसहनम् —**

गंगाजले यो न जहौ सुरेशा, विद्धोऽपि शूले समताऽनुवेधम् ।
प्रयागतीर्थोदयकृन्मुनीनां, मान्यः स सूरिस्तनुजोऽर्न्नि(णि)कायाः ॥२०॥

'यो' अर्न्निकापुत्रनामा सूरि र्यः गंगाजले शूले सुरेण विद्धोऽपि समताऽनुवेधं न जहौ गंगाया-जलमध्ये सुरेण शूले-शूलिकायां विद्धोऽपि-विध्यते स्म विद्धः-वेधितोऽपि समतया सहानुगतं-व्यापकं वेधं वेधनं, समतया सह व्यापकप्रोतभावं न जहौ-न तत्याज-त्यक्तवान्न सोऽर्न्निकायास्तनुजः सूरिःप्रयागतीर्थोदय कृन्मुनीनां मान्यः-सोऽर्न्निकापुत्रः (अर्णिकापुत्रः) सूरिराचार्यः, ततम् तत्स्थानं प्रयागतीर्थत्वेनोदितमतः कथ्यते प्रयागतीर्थोदयकृदाचार्यो मुनीनां-साधूनां मान्यः-मानयोग्यः संजातः ॥२०॥

क्षणमात्रमपि साम्यावलम्बनं घोरातिघोरपापानामुद्धारकं—

स्त्री-भ्रूणगोब्राह्मणघातजात-पापादधःपातकृताऽऽभिमुख्याः ।
दृढप्रहारि-प्रमुखाःक्षणेन, साम्याऽवलम्बात्पदमुच्चमापुः ॥२१॥

'स्त्रीहत्या महापापं' भ्रूणहत्या महापापं, गोहत्या महापापं, ब्राह्मणहत्या महापापं इत्यादिकानि सर्वधर्मशास्त्रमहापापानि चत्वारि जनप्रसिद्धानि, एतच्चतुर्महापापरूपात् समकालं स्त्रीघातात्, भ्रूणघातात् गोघातात् ब्राह्मणघाताज्जातात् पापाद् अधःपातं-अधोगतिं प्रति कृतं आभिमुख्यं-अभिव्याप्तं मुखेऽस्मिन्

अभिमुखं तस्य भाव आभिमुख्यं-साम्मुख्यं येषां ते 'स्त्रीभ्रूणगोब्राह्मणघातजात-पापादधःपातकृताऽऽभिमुख्याः' के ते ? इत्याह 'दृढप्रहारिप्रमुखाः' दृढप्रहारिनामकाः प्रमुखाः-मुख्याः आदयःदृढप्रहारिप्रमुखाः आदिपदेनार्जुनमालिकादयो ज्ञेयाःदृढप्रहारि-प्रभृतयो घोरातिघोरक्रूरकर्मकारिणोऽपि क्षणेन-क्षणात् समताधर्ममवलम्ब्य उच्चपदं निर्वाणास्पदमापुः-प्राप्तवन्तोऽभूवन्निति ॥२१॥

**प्रथमतीर्थपतेर्माता मरुदेवा शिवं गता तत्र समताया अपारमहिमा--**

अप्राप्तधर्माऽपि पुरादिमार्हन्माता शिवं यद्भगवत्यवाप ।
नाप्नोति पारं वचसोऽनुपाधि-समाधि-साम्यस्य विजृम्भितं तत् ॥२२॥

'अप्राप्तधर्माऽपि' पूर्वमप्राप्तो धर्मो यया सा अप्राप्तधर्मा (अपि प्राप्तधर्मणस्तु का वार्त्तेत्यप्यर्थः) 'पुरा'-प्राग् (प्रथमं तावत्)'आदिमार्हन्माता शिवं यद् भगवत्यवाप'-प्रथमतीर्थकरर्षभदेवमाता-मरुदेवामाता भगवती-पूज्या, यत्-यतःशिवमवाप तद्-ततः'अनुपाधिसमाधि-साम्यस्य विजृम्भितं' अन्यवस्तुसान्निध्यरूपोपाधितोजन्यत्वाभावविशिष्टसमाधिजनकसमताभावस्य विजृम्भितं-विकसितं महिमा-प्रभावरूपं तत् वचसो नाप्नोति पारं वचनतोऽप्राप्यपारमगोचरं विशिष्टसाम्यस्य विजृम्भितम् ॥२२॥

**साम्ययोगशुद्धिनामकचतुर्थाधिकारस्योपसंहारः--**

(हरिणी)

इति शुभ-मति मत्वा साम्यप्रभावमनुत्तरं
य इह निरतो नित्यानन्दः कदाऽपि न खिद्यते ।
विगलदखिलाविद्यः पूर्णस्वभावसमृद्धिमान्,
स खलु लभते भावारीणां जयेन यशःश्रियम् ॥२३॥

इत्येवं प्रकारेण, शुभमतिः-शुभा अतिशयेन प्रशस्या (क्लेशनाशिनी-पुण्यात्मना सम्बन्धिनी-हर्षकारिणीस्तुतियोग्या-कल्याणी-नीरुजत्वप्रापिका-शोभन भूता) मति बुद्धि र्यस्य स 'शुभमतिः' अनुत्तरं-नास्त्युत्तरमस्मादनुत्तरं-प्रकृष्टं-प्रधानं 'साम्यप्रभावं'-समताया माहात्म्यं 'मत्वा'-ज्ञात्वा, 'यः' शुभमतिः 'इह' प्रकृष्टप्रभावति साम्ययोगे 'निरतः' तत्पर.तन्निष्ठः, नित्यः-शाश्वतआनन्दः-परमसुखं यस्य स 'नित्यानन्दः' कदाऽपि कस्मिश्चिदपि काले न 'खिद्यते'-न खेदवान्-न चिन्तातुरः-न ग्लानिमान भवति परन्तु सदा प्रसन्नो भवतीत्यर्थः । स साम्यनिरतो मुनिः साम्ययोगी, 'विगलदखिलाविद्यः' 'विनश्यन्ती समस्ता अविद्या-अतत्त्वबुद्धिर्यस्य स विगलदखिलाविद्यः= सामस्त्येनाविद्यायाः अत्यन्ताभाववानित्यर्थः, 'पूर्णस्वभावसमृद्धिमान्' क्षायिकादिभावरूप-पूर्णस्वभावरूपसमृद्धिविशिष्टः, खलु-निश्चये भावारीणां जयेन यशःश्रियं लभते= रागद्वेषमोहादिरूपान्तरङ्गशत्रूणां जयेन-विजयेन यशःश्रियं-निर्वाणादिपदप्राप्तिआदिजन्ययशःकीर्तिशोभां लभते-प्राप्नोतीत्यर्थः ॥२३॥

## प्रशस्तिः

गुणवद् गूर्जरे देशे, दयालु-जन-शोभिते ।
गोडीपार्श्वस्य चैत्यं हि राजते ईडरेऽत्र च ॥१॥

ईडरोपरि शान्तीश-चैत्यं रम्यं हि शोभते ।
८ ३ ० १
सिद्धि-गुप्ति-खं-नेत्राख्ये वर्षे वैक्रमीये वरे ॥२॥

प्रारब्धा हि मया टीका स-श्रीका शान्तचेतसा ।
अध्यात्मोपनिषत्सत्का, तत्रेडरवरे पुरे ॥३॥

राजस्थाने महाप्रान्ते मयूरादि-सुमण्डिते ।
९ ३ ० २
निधि-गुप्ति-ख-नेत्राख्ये वर्षे वैक्रमीये वरे ॥४॥

विमलचन्द्र-विश्वेशचैत्यद्वयमनोहरे ।
समाप्ताऽत्र मयाऽऽहता, बादनवाडिसत्पुरे ॥५॥

८ २ ० २
सिद्धि-नेत्राऽभ्रहस्ताख्ये वर्षे वैक्रमके शुभे ।
महाप्रकृति कर्मायुः–क्रमकारण–योगतः ॥६॥

धर्मदिवाकराचार्य-भुवनतिलकाऽभिधः ।
दावणगिरिसद्द्रंगे दिव्यज्योति दिवं गतः ॥७॥

स्वर्गमन–समाचारो, बेरमो स्थिरताकृताम् ।
अस्माकं दुखदः प्राप्तो गुरोरत्र समागतः ॥८॥

कृत्वा मनसि संकल्पं टीकाद्वयं तु संस्कृते ।
चक्रे तदा वचोदानं, रचनीयं मयेति तत् ॥९॥

अध्यात्मसारसद्ग्रन्थे, टीका प्राक्प्रकृता मया ।
अध्यात्मोपनिषद्ग्रन्थे द्वितीया च कृताऽमला ॥१०॥

अद्यानन्दोदधि र्जज्ञे, टीकाद्वयसमाप्तितः ।
देवगुरु-महिम्नाऽथ, भद्रंकरस्य मानसे ॥११॥

भुवनतिलकाचार्ये-श-पट्टभृत्सुसूरिणा ।
भद्रंकरेण संदृब्धा टीका जयतु नित्यशः ॥१२॥

इति श्री पण्डितनयविजयगणि-शिष्य-पण्डितपद्मविजयगणि-सहोदरोपाध्याय श्री यशोविजगणि-विरचितेऽध्यात्मोपनिषत्प्रकरणे साम्ययोगशुद्धिनामा चतुर्थोऽधिकारःसमाप्तः । आचार्य श्रीमद्विजयलब्धिसूरीश्वर-पट्टधरविजय भुवनतिलकसूरीश्वरपट्टधरविजयभद्रंकरसूरिणाऽध्यात्मोपनिषत्प्रकरणे रचितायां भुवनतिलकाख्यायां टीकायां साम्ययोगशुद्धिनामा चतुर्थोऽधिकारः समाप्तः ॥ (अस्मिन् ग्रंथे जिनाज्ञादि विरुद्धं स्यात् तन् मिथ्या मे दुष्कृतं भूयाद् ।)

❋ समाप्त ❋

# ❀ शुद्धिदर्शनम् ❀

अत्र ग्रन्थे यत्रोपनिषत्तत्रोपनिपद् इति वाच्यम्

| पेज न | पक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १२ | ७ | नार्थं | नार्थं |
| १८ | ३ | रक्ते | सृक्ते |
| १९ | ८ | चक्षुषो | चक्षुषो |
| १९ | ६ | शास्त्र चक्षुष. | शास्त्रचक्षुष: |
| ,, | १२ | ऽतो | ऽत |
| २४ | १३ | मुत्तीर्णां | मुत्तीर्णं |
| ३१ | १ | लभ्व्या | लभ्व्यो |
| ३५ | १० | ग्येण | ग्र्येण |
| ३९ | १ | विपक्षितैक | विवक्षितैक |
| ४० | ५ | वृत्ति: | परावृत्ति· |
| ,, | ८ | निर्णया | निर्णयो |
| ४१ | ६ | निष्टत्वनै | निष्टत्वेनै |
| ४२ | ७ | दोषाणा | दोषाणाम |
| ४३ | ८ | जनो | जनाऽपि |
| ४४ | ७ | गुम्फ | गुम्फित |

| पेज न | पक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४६ | ५ | चित्र | चित्र |
| ,, | ,, | रूप | रूपं |
| ४७ | ३ | गुरू. | गुरु· |
| ५९ | ,, | प्रकल्पिता | प्रकल्पिता: |
| ६० | १३ | करणैव | करणैत्र |
| ६१ | ४ | ,, | ,, |
| ,, | ११ | ऽ | केन्सल |
| ६३ | ५ | व क्यार्थ | वाक्यार्थ |
| ,, | ६ | पूर्वक | पूर्वक |
| ,, | ८ | ज्ञाना | ज्ञाना– |
| ६४ | ५ | पक्ष | पक्ष |
| ६५ | १ | भवत | भवति |
| ६८ | २ | तद्वार्त्ता | तद्वार्त्ता |
| ७६ | ४ | प्रतिभ | प्रातिभ |
| ८३ | १ | रम्भ | रम्भि |

शुद्धि-पत्रकः



| | | | |
|---|---|---|---|
| ८४ | ३ | मास्मीयं | आस्मीय |
| ९६ | ७ | वती | वद् |
| ९७ | १ | मंयी | मंय |
| ९८ | १० | विशेपो | विशेष |
| १०० | ४ | पयो. | पयो: |
| १०४ | ९ | भाग | भाग् |
| १०८ | ४ | पुन्दल | पुद्‌गल |
| ११० | १३ | द्वैत | द्वैत |
| १११ | २ | ,, | ,, |
| ११९ | ७ | बिकल्ष | विकल्प |
| १२१ | ७ | मायाया | मायाया. |
| १२५ | ५ | न | नः |
| ,, | ९ | वृति | वृत्ति |
| १२९ | ४ | यागस्य | योगस्य |
| ,, | ९ | वस्थाया | वस्थाया |
| १३० | १० | पड्‌विध | षड्‌विध |
| १३१ | ७ | कोग्यता | योग्यता |
| ,, | १३ | परैरपि | परैरपि |
| १३९ | १२ | नान्चित | नान्वित: |
| १४२ | ९ | परिमामो | परिणामो |
| १४५ | ११ | नहि | न हि |
| १४६ | ३ | हि | मर्पस्य हि |
| १४८ | १ | वीज | वीज |
| १५२ | ८ | यत् : | यदि |
| १५४ | १० | सत्पुप | मत्पुरुप |
| १५७ | १० | दर्शायित्वा | दर्शयित्वा |
| १५८ | ९ | ष्टाना | ष्ठाना |
| ,, | १३ | तादात्म्यन | तादात्म्येन |
| १६६ | १० | विलल्ब· | विलम्ब· |
| ,, | १३ | ·नामैकै | नामकै |
| १६७ | १ | विलम्व: | विलम्ब· |
| ,, | ४ | सुस्वे | सुखे |
| १७० | ११ | ज्योतिर्भी· | ज्योतिभो· |
| १७१ | १ | परमा | परमात्म |
| १७२ | १३ | ज्ञना॥ | ज्ञानाना |
| १७५ | ११ | सत् | सन् |
| ,, | ३ | राजर्प्पिणा | राजर्पिणा |
| १८० | १० | यत् | यद् |
| ,, | ,, | तद् | तत् |
| ,, | ११ | तत् | तद् |

॥१८६॥